THE

KĀSHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

NO. 77.

( Nyaya Section No. 10. )



THE

# SAKTIVĀDA

*By*

S'RI GADADHARA BHATTĀ CHĀRYA

*With the Vivriti Commentary*

*By*

PANDIT PRAVARA S'RI HARĪNATHA TARKA SIDDHĀNTA BHATTĀCHARYA.

*Edited with Critical Notes by*

SAHITYADARSANACHĀRYA DARSHANIKASARVABHAUMA TARKARATNA NYAYARATNA

GOSWAMI DAMODAR S'ASTRI

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office, Vidya Vilas Press.*

*North of Gopalmandir, Benares City.*

1929

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरीज़पुस्तकमालायाः
७७
न्यायविभागे (१०) दशमं पुष्पम् ।

* श्रीः *

# शक्तिवादः ।

नैयायिकचक्रचूडामणिश्रीगदाधरभट्टाचार्यप्रणीतः

पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्य-
विरचितविवृत्तिव्याख्यया सहितः ।

स च

श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शना-
द्याचार्यतर्करत्नन्यायरत्नगोस्वामिदामोदरशास्त्रिणा
परिष्कृत्य संशोधितः ।

प्रकाशक—
जयकृष्णदास-हरिदास गुप्त—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलासप्रेस, गोपालमन्दिरके उत्तर फाटक,
बनारस सिटी ।

१९८६

# संपादयितुर्वक्तव्यम्—

## श्रीमद्धनुमद्भीममध्वान्तर्यामिरामकृष्णवेदव्यासात्मकस-च्चिदानन्दविग्रहपूर्णतमाह्लादिनीशक्त्यभिन्नीकृतस्व-रूपप्रेमावतारभगवच्छ्रीश्रीगौरकृष्णः शरणम् ।

इह किल प्रतायमाने प्रपञ्चे प्रमाणप्रमेयत्वेन व्यवस्थिते च मानाधीना मेयसिद्धिरिति नयेन प्रमेयमात्रस्यैव प्रमाणायत्तसिद्धिकतयोपजीव्यत्वेनादौ लोकानां प्रमाणबुभुत्साया एवौत्सर्गिकत्वात् तन्निरूपणाय संनद्धवतां प्रामाणिकानां-यद्यपि तदीयस्वरूपलक्षणसंख्यासम्बद्धविप्रतिपत्तिसत्त्वादसामञ्जस्यमिवोपस्थितं तटस्थैरभिलषितायास्तपस्विन्याः प्रमेयव्यवस्थापनायास्तथाऽपि प्रमाणत्वेन प्रसिद्धितोऽभ्यर्हितायामान्वीक्षिक्यामेव विद्यायां युक्तायुक्तविवेकालंकर्मीणविपश्चिन्मानसान्यादरसध्रीचीनान्यायतन्तेतमामिति नाव्यक्तं निरपेक्षविदुषाम्,

एनया चोपदिदिक्षितं प्रमाणमत्रभवदक्षपादमहर्षिपादाः "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"ति सूत्रेण निरदीधरन्, व्यवातिष्ठिपंश्च तद्भाष्यवार्त्तिकप्रणेतृप्रभृतयः, तदन्वेनमेवार्थं महत्याऽऽरभट्याऽदभ्रपराक्रान्त्या प्रसक्तानुप्रसक्तनिरूपणोपबृंहणेन विप्रतिपन्नप्रतिपन्ननिरसनविजृम्भणेन विद्वच्चेतांसि गृहयालुभिरनितरसाधारणीभिर्वाचोयुक्तिभिरुपापीपदन् मुनिकल्पास्तर्काम्बुधिपारगाः श्रीगङ्गेशोपाध्यायमहोदयाः समन्वर्थनामकं निबन्धमूर्धन्यं चिन्तामणिं संदृभ्य,

अत्रत्यान्येव प्रत्यक्षादिखण्डानि समष्टिव्यष्टिरूपेणावलम्ब्य सर्वपथीनास्तार्किकाः पारेसहस्रं ग्रन्थान् व्यरचन्,

तत्र शब्दखण्डे विवेचितेषु बहुष्वेवार्थेषु शब्देनार्थे बोधनीये बोध्यबोधकयोः केनापि सम्बन्धेनावश्यं नान्तरीयकेण भवितव्यमिति कीदृगयमुचित इति विचिकित्सायां प्रत्यासन्नैस्त्रिभिरेव प्राधान्येन स्वस्वसमयमनुसृत्य विचारितः सः,

पदार्थव्युत्पादनाधिकाराद् वैयाकरणैः,वाक्यार्थनिर्णयाधिकारान्मीमांसकैः, तदुभयप्रमापणाधिकारान्नैयायिकैश्च,

तत्र वैयाकरणाभिमतां बोधकतारूपां मीमांसकोपगतां पदार्थान्तरात्मिकां-च शक्तिमरोचयमानानां नैयायिकानामनुमोदनीयां भगवदिच्छारूपामिच्छारूपां-वा तां निर्विवक्षन्तोऽस्या वादं तत्त्वनिर्णायकं कथाविशेषं निबिभन्त्सवस्तार्किकचक्रचूडामणयः श्रीगदाधरभट्टाचार्याः शक्तिवादनामकं स्वप्रौढिमातिशयेन शक्तिविवेचकनिबन्धान्तराखर्वगर्वसर्वङ्कषं ग्रन्थरत्नं न्यभान्त्सुः,

अत्र च निबन्धा विभक्तेषु त्रिषु काण्डेषु ह्यादिमे सामान्यकाण्डे यावत्प-

दगतामनुगतां शक्तिं परमतनिरसनपुरःसरमुपपाद्य: द्वितीयस्मिन् विशेषकाण्डे विवादास्पदशक्तिककतिपयपदविशेषाणामेनां तथैव व्यवस्थाप्य; चरमे परिशिष्टकाण्डे च भट्टपादश्रीकरमण्डनमिश्रगुरुप्रभाकराणां मीमांसकधुर्य्याणां शक्तिविषयकान् विचारान् प्रदर्श्य ग्रन्थोऽयमुपसमहारि,

अधुनातनविज्ञजनरुचिकरग्रन्थकृत्संबद्धविषयान्तरपरिचयावगमसंपादनाय प्रवृत्त्य सायासं प्रयत्यापि यावदुपलब्धं तावदितिहासप्रियान् प्रमोदयितुमुपक्रम्यते—

प्रकृतग्रन्थकारा गदाधरभट्टाचार्य्याः पूर्वबङ्गेषु पावनेतिप्रसिद्धप्रान्तीय"लक्ष्मीचापरा"ग्राममधिवसति वारेन्द्रश्रेणिभुक्तविप्रवंशे लब्धजन्मानः कुतोऽपि हेतोः ( गोयारी ) कृष्णनगरराज्यान्तर्गते श्रीनवद्वीपधामन्यागच्छता पित्रा सममागत्य तत्रत्यात्तदानींतनविद्वत्समाजलब्धगौरवाद् हरिरामतर्कवागीशभट्टाचार्यतस्तार्किकप्रष्ठान्न्यायशास्त्रमधीयानाः समाप्तकल्पेऽस्मिन् शास्त्रे देवभूयं गतेऽध्यापके गुर्विच्छाऽनुसारिणा गुरुपत्न्यादेशेन गुरोरेवाध्यापनालये संप्रदायाविच्छेदरक्षणायाधिजिगापयिषवोऽपि तद्देशेऽद्यावधि प्रचरितव्यवहारतोऽध्ययनसमापनोत्तरं प्राप्यस्य गुरुदत्तोपाधेरलाभादलब्धप्रतिष्ठाद् गुरोरध्ययने मर्यादाहानितो बिभ्यतामत एवाध्येतुमनागमनं छात्राणामालोच्याप्यभग्नोत्साहाः क्व चनोपमार्गमुपवने तरूनन्तेवासिन इवाध्यापयितुं प्रावर्तिषत,

तदा तु तदीयमुदग्रमुत्कटमध्यवसायं तत्राप्यध्यापनपटिमानं तत्रापि विलक्षणविषयाविष्करणक्षमं प्रतिभाविकासमवगम्येतस्ततो गच्छतां विज्ञानां मुखेभ्योऽदसीयवैदुष्यागाधतामौपकर्णिकीं कुर्वाणाः प्रबलगुणाकृष्टास्त एव च्छात्रा अहमहमिकयोत्सह्यैवैनानशिश्रयन्,

एवंजातीया बहवः कौतुकावहाः प्रवृत्तयोऽस्मदीयभट्टाचार्य्याणाम्, अतः कियन्निवेद्यं दिग्दन्तावलदानमलीमसकरटकूटशितिमनाडिंधमयशश्चन्द्रक्षीरोदधीनामेषाम्,

सर्वमेतदुदन्तजातं तत आरभ्यैव श्रीनवद्वीपे पुरुषानुक्रमाद् वसतां तदीयवंश्यानां मुखाद् बहुशः श्रुतं मया नव्यन्यायानुमानखण्डमध्येतुं गत्वा बहुकालं तत्र स्थितेन,

ग्रन्थस्यास्य पञ्च टीका उपलभ्यन्ते संप्रति—

एका विवृतिनामिका हरिनाथतर्कसिद्धान्तकृता,
द्वितीया कृष्णभट्टनिर्मिता मञ्जूषाऽऽख्या,
तृतीया माधवतर्कसिद्धान्तरचिता माधवीति प्रथिता विवृतिः,
चतुर्थी त्वस्मद्विहिता विनोदिनीसंज्ञिका,
पञ्चमी चास्मत्सतीर्थ्यपञ्चनदीयसुदर्शनशास्त्रिलिखिताऽऽदर्शाभिधा,

तत्रान्तिमा मूलेन सह पृथङ्मुद्रिता, द्वितीयातृतीयाचतुर्थ्यश्च समूला-अस्मत्संपादिताश्चौखम्भासंस्कृतग्रन्थमालाऽध्यक्षप्रकाशिताः समेकत्र सन्ति,

प्रथमा च नवद्वीपस्थहरिनाथतर्कसिद्धान्तेनैव निर्माय कलिकातानगरे संमुद्र्य प्राकाशि सामान्यकाण्डान्ता,

अवशिष्टा च तदीयमध्यात्मजेन सर्वेश्वरभट्टाचार्येण परस्तात् प्रकाशं-नीता; किन्तु निखिलाऽप्येषा शोधकमुद्रकाद्यनवधानतोऽत्यशुद्धिभागेव मुद्रिता-ऽऽसीत्, परन्तु तादृश्यप्येषा दीर्घसमयपूर्वं जातमुद्रणतयाऽवाप्तदौर्लभ्येति—

विविधप्राचीनग्रन्थप्रकाशनबद्धपरिकरेण श्रेष्ठिश्रीजयकृष्णदासगुप्तमहोदये-नास्मत्स्नेहास्पदेन स्वकीयविद्याविलासनामके मुद्रणालये स्वव्ययेन सोत्साहं समूलाऽसौ प्रकाशिता,

अस्या व्याख्यायाः प्रकाशनाय टीकाकर्त्तुः कनिष्ठतनयेन श्रीयुक्तकेदारेश्वरभट्टाचार्येणाधिकारो दत्तो निर्दिष्टकार्यालयाध्यक्षायेति चिरायैतदुपकारेण कृतज्ञतानद्धोऽयमित्यसकृदावेदयति,

एतन्मुद्रणार्थं च पुस्तकं श्रीपण्डितप्रवरसरयूपारीणरामेश्वरशुक्लतनूजन्मा वाराणसेयराजकीयसंस्कृतपाठशालीयपरीक्षासूत्तीर्णव्याकरणोपाध्यायन्यायाचार्यपरीक्षो विहारोत्कलसंस्कृतसमितेर्लब्धव्याकरणतीर्थसाहित्योपाध्यायपदवीकोऽयोध्यास्थविद्वत्समितेर्लब्धमीमांसकशिरोमणिपदवीभूषितः सूर्यनारायणशुक्लो दत्तवानित्येषोऽपि महाभागो धन्यवादार्हः,

टीकाकृद्विषयकमैतिह्यं चानतिचिरस्य संपिपादयिषितव्याया मुक्तिवादेदमीयटीकाया भूमिकायां निर्देक्ष्यते,

अत्र च सौकर्य्यार्थं विषयानुक्रमोऽपि संन्यवेशि,

एवं बहुश्रमेणावधानपुरस्सरं संपादितेऽप्यस्मिन् कार्ये मानुष्यकनान्तरीयकदोषजास्त्रुटीरुपेक्ष्य; कलहंसप्रकृतयो विज्ञाः शक्तिविचारमर्मानुभवरसमास्वादयन्तुतमाम्,

प्रसीदतु चानेन व्यापारेण सर्वान्तर्यामी भगवान् गौरकृष्णतनुः श्रीश्रीराधिकारमण इत्याशासानो विरमति मुधा विस्तरादिति, शम् ।

मार्गसुदि ७
वै० सं० १९८६
काश्याम् ।

श्रीमन्माध्वसम्प्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य्यतर्करत्नन्यायरत्न—

**गोस्वामिदामोदरशास्त्री ।**

श्रीश्रीगौरकृष्णः शरणम् ।

# शक्तिवादविषयानुक्रमः—

## तत्र सामान्यकाण्डे—

# विशेषकाण्डे—



———·——

## परिशिष्टकाण्डे—



## विशेषसूचना—

अत्र पृष्ठादिसंख्या मूलस्यैव दर्शिता, टीकायाः क्रमस्तेनैव सुकर-दर्शन इति ।

शम् ।



श्रीकृष्णः शरणम् ।

ॐ नमो गणेशाय ।

## सविवृतिकः ।

# शक्तिवादः ।

## सामान्यकाण्डम् ।

सङ्केतो लक्षणा चार्थे पदवृत्तिः ।

ॐ नमः शिवाय ।

## विवृतिः ।

शिवोऽप्युद्बुद्धशक्तिश्चेत् समर्थः स्वार्थसाधने ॥
साकाङ्क्षः शब्दवन्नेता वन्दे तं शक्तिभूषितम् ॥ १ ॥
विद्वद्वरोऽभूद् हरचन्द्रनामा तत्पुत्र आसीत् प्रथितातिकीर्त्तिः ॥
गोलोकनाथः शुचि नीरजं सद् वाणी श्रिता यद्रसनं विदित्वा ॥२॥
विचिन्त्य तत्तातपदारविन्दं विभाव्य गाढं हरिनाथनाम्ना ।
विशद्यते दुर्गमशक्तिवादः सतां प्रमोदाय गदाधरोक्तः ॥ ३ ॥

इह खलु सर्वैः शब्दैः श्रूयमाणैरपि सदा सर्वेषां न तदर्थप्रतिपत्तिः; न वा सद्यः; किन्तु कदा चित् शब्दैः केषाञ्चित स्वल्पचिरेण जन्यते, कल्प्यते च तस्मात् तत्सम्पादिनी पदपदार्थसम्बन्धबिशेष धीजनितपदार्थसार्थोपास्थितिरेव, इतरेषान्त्वन्वयव्यतिरेकानियमविरहगौरवादिदोषकवलितत्वेन न तत्कल्पनसम्भवः, स च सम्बन्धविशेषः किंस्वरूप इति जिज्ञासूनामन्तेवासिनां तदवधारणार्थं तद्विशेषस्यैव स्वरूपं वाच्यमिति तं विभज्य परीक्षासहितं सामान्यतो विशेषतश्च तत्स्वरूपमाह--सङ्केतो लक्षणा चेत्यादि ।

चकारार्थः समुच्चयः, तच्च धीविशेषविषयत्वं द्वित्वं पर्य्यवसितं, वृत्तिः शाब्दबोधौपयिकः सम्बन्धः, तथा चार्थप्रतियोगिकः पदानुयोगिकः, अर्थानुयोगिकः पदप्रतियोगिको वा तादृशः सम्बन्धः सङ्केतलक्षणाद्वयमित्यर्थः ।

केचित्तु-अयं ग्रन्थो न विभागपरो वृत्तित्वसामान्यधर्म्मस्य पूर्वाकथनेन तद्विशेषजिज्ञासाऽनुदयात्, तत्परत्वे लक्षणाया अप्यवश्यनिरूपणीयत्वेन तदनिरूपणाद् न्यूनत्वाच्च; किन्तु शाब्दबोधौपयिकसम्बन्धस्य पदार्थान्तरत्वनिराकरणक्लृप्तपदार्थस्वरूपत्वप्रदर्शनपरः, लक्षणा चेत्यंशस्तु दृष्टान्तार्थमित्याहुः।

तन्न शोभनं-शाब्दबोधौपयिकसम्बन्धत्वरूपसामान्यधर्म्मस्योक्तरीत्या मनसैव सुग्रहत्वाद् विभाग उद्दिष्टधर्म्मस्य शब्दजन्यज्ञानमात्रानपेक्षणाच्च,

लक्षणायास्तु ग्रन्थान्तरे निरूपितत्वात् सङ्केते निरूपिते तत्सम्बन्धरूपलक्षणाया अपि स्फुटतयैव लाभादनिरूपणेऽपि न्यूनत्वाभावात् शक्तेरज्ञातत्वे शक्यसम्बन्धरूपलक्षणाया अप्यज्ञातत्वेन दृष्टान्तत्वायोगाच्चेति।

अथ विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वस्यैवावगतसामान्यधर्म्मावच्छिन्नानां किञ्चित्संख्यकविशेषधर्म्मेणाभिधानस्याधिकसंख्याऽवच्छिन्नव्यवच्छेदकतयाऽपि व्युत्पत्तिसिद्धत्वेन विभाजकधर्म्मे त्रित्वादिसंख्याव्यवच्छेदो लभ्यते; स च न सम्भवति; व्यञ्जनाया अपि वृत्तित्वावश्यकत्वाद्, अन्यथा—

"मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितम्"

इत्यादौ परस्परविभागजनकक्रियारूपविकासस्य मुखे बाधाल् लक्षितार्थस्य विस्तृतस्यान्वयबोधानन्तरं मुखे कुसुमतुल्यसौरभवत्तायाः चमत्कृतिरमणीयताया वा बोधस्यानुभवसिद्धस्यापलापापत्तेरिति चेद्? न—

मनसैव तत्तत्पदार्थस्य स्मृतिसहकारेण बोधनिर्वाहात्; तदर्थं व्यञ्जनाया वृत्तेः कल्पनानावश्यकत्वाद्,

न चैवं गामानयेत्यादिवाक्यानन्तरं तत्तत्पदार्थोपस्थितिसहकृतमनसैव विशिष्टबोधः सम्पाद्यतां किं शक्त्यादेः वृत्तित्वकल्पनयेति वाच्यम्?

यतः पदजन्यपदार्थोपस्थितिर्यत्र सम्बन्धान्तरज्ञानजन्यपदार्थान्तरोपस्थितिरूपा तत्र विशिष्टबोधे तादृशपदार्थान्तराभानाद् वाक्यजन्यबोधस्य नियन्त्रितविषयकत्वस्यावश्यकत्वेन तादृशबोधस्य मानसत्वायोगः,

एवं व्यञ्जना स्वरूपसती ज्ञाता वा कारणं? तत्र नाद्यः-तथा सति विकसितादिपदेन सर्व्वदा सर्व्वस्यैव व्युत्पन्नस्य तादृशबोधापत्तेः; न

तु सहृदयमात्रस्य; व्यञ्जनाया अविशेषाद्, इष्टापत्तावनुभवविरोधः सहजाप्रतीयमानरूपगूढत्वस्य तादृशव्यङ्ग्येऽनुपपत्तिश्च स्याद्, नापि द्वितीयः—शक्तिग्राहकव्यवहारकोषादिवल्लक्षणाग्राहकप्रत्यक्षादिवच्च तद्ग्राहकस्य वक्तव्यत्वापाताद्, ज्ञानसामान्यसामग्री तद्ग्राहिका चेत् पूर्वोक्तदोषस्य जागरूकत्वाच्चेत्यादिकं द्रष्टव्यम् ।

अर्थ इत्यनुक्तौ वृत्तित्वं शाब्दबोधानुकूलज्ञानविषयसम्बन्धत्वं; तच्च सङ्केतादाविवाकाङ्क्षाऽऽदिज्ञानविषये तत्तत्पदाव्यवहितोत्तरत्वरूपसम्बन्धादावप्यस्ति; अतस्तत्रापत्तिवारणायार्थ इति, तथा चाव्यवहितोत्तरत्वादेरर्थप्रतियोगिकत्वाभावान्न तदापत्तिः, पचतीत्यादौ योग्यताज्ञानविषये पाकादिप्रतियोगिकानुकूलत्वादौ वृत्तित्ववारणाय पदेति, तथा च तादृशानुकूलत्वादेः पदानुयोगिकत्वाभावान्न तदापत्तिः ।

ननु वृत्तित्वं शाब्दबोधजनकोपस्थितिजनकज्ञानविषयसम्बन्धत्वमेव वक्तव्यम्; अत एव वृत्तिः शाब्दबोधौपयिकोपस्थितिजनकः पदपदार्थयोः सम्बन्धः कल्प्यत इति शब्दमण्यालोके मिश्रैरभिहितम्, एवञ्च तादृशाव्यहितोत्तरत्वादेः शाब्दबोधजनकोपस्थितिजनकज्ञानविषयत्वाभावेन न तदापत्तिरिति चेद् ? न—

तथाऽप्युपस्थित्यात्मकाकाङ्क्षाऽऽदिज्ञानजनकवाक्यविषयकानुभवविषयेऽव्यवहितोत्तरत्वादौ तदापत्तिसम्भवाद्,

अथ शाब्दबोधनिरूपिता या स्मृतित्वावच्छिन्नजनकता तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावत्सांसर्गिकविषयतावत्वं वृत्तित्वमुच्यते ? आकाङ्क्षाज्ञानादेः शाब्दं प्रति निश्चयत्वेनैव कारणत्वं न तूपस्थितित्वेन नातः पूर्वोक्तदोष इति चेद् ?

एवमपि; वर्णादिविषयकशाब्दबोधनिरूपितवर्णविषयकोपस्थितित्वावच्छिन्नजनकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतावती या वर्णपदं शक्तिसम्बन्धेन वर्णवदित्यादिज्ञानीयवर्णवर्णत्वयोः सम्बन्धनिष्ठा सांसर्गिकविषयता तदाश्रयसमवायादौ वृत्तित्वापत्तिवारणायार्थ इति,

न च वर्णत्वस्याप्यर्थपदार्थतया समवायस्यानैक्यमतेऽपि तन्निवेशेनापि न तद्वारणमिति वाच्यम् ?

अर्थ इत्यस्य प्रकारताऽवच्छेदकताऽवच्छेदकत्वानच्छिन्नतादृशसांसर्गिकविषयस्य वृत्तित्वत्वे तात्पर्य्याद्,

एवञ्च तादृशज्ञानीया याऽऽनुपूर्व्वीपदयोः सम्बन्धनिष्ठा विषयता

तामादाय तादृशसम्बन्धे वृत्तित्वापत्तिवारणाय पदेति, अस्य च तादृशसांसर्गिकविषयतायां विशेष्यताऽवच्छेदकताऽवच्छेदकताऽनात्मकत्वे तात्पर्य्येण तद्वारणं प्रतिभाति, तथा चार्थेत्यादेरवच्छेदकताऽवच्छेदकत्वानवच्छिन्नतादृशसांसर्गिकविषयत्वं पर्य्यवसितार्थः।

के चित्तु–शाब्दबोधानुकूलोऽर्थे पदस्य सम्बन्धः कीदृश? इति जिज्ञासया तन्निरूपणं तादृशजिज्ञासानिवृत्तिस्त्वर्थपदघटितोद्देश्यबोधकपदसंबलितोत्तरवाक्यं विना न भवत्यतोऽर्थ इत्यादिप्रयोजनान्तरानुसन्धानं विफलमिति प्राहुः।

ननु सङ्केतो लक्षणा चेति विभजनं न युज्यते? यस्मात् शाब्दबोधनियामको ज्ञातः पदपदार्थयोः सम्बन्ध इति प्राचैर्गीयते; तेन पदस्यार्थोऽभिधेयः पदार्थ इति व्युत्पत्त्या पदशक्य एव पदार्थो वक्तव्यः, अन्यथा घटादेरपि पटादिपदार्थत्वापत्तिरेवञ्च पदलक्ष्यार्थयोः सम्बन्धे वृत्तित्वं न वक्तुमर्हतीत्यत आह—वृत्त्येत्यादि।

वृत्त्येत्यादिग्रन्थस्य पदार्थपदव्यवहारविषयनिर्वचनपरत्वमिति केषाञ्चिद्व्याख्यानं न सम्यक्;

तादृशग्रन्थस्य सामान्यतः पदार्थपदव्यवहारविषयनिर्वचनपरत्वे वस्तुमात्र एव तत्सत्त्वेनाव्यावर्त्तकतया वृत्त्येत्यस्य व्यर्थत्वापत्तेः, गगनकुसुमादेश्चालीकत्वेन धर्म्मिणोऽलाभे तादृशव्यवहारविषयत्वासम्भवाच्च पदपदार्थविशेषघटितपदार्थपदव्यवहारविषयनिर्वचनपरत्वे शक्त्या जलप्रवाहादेरिव लक्षणया तीरादेरिव च पदार्थमात्रस्यैव जलप्रवाहकालिकादिसम्बन्धरूपलक्षणया नद्यादिपदप्रतिपाद्यत्वेन नद्यादिपदघटितपदार्थपदव्यवहारविषयत्वसम्भवेन तद्दोषतादवस्थ्याद्,

यदि च यत्र यत्रार्थे आधुनिकदेवदत्तादिपदानां कस्यापि पुंसस्तात्पर्य्यादिकं न ज्ञायते तत्र तत्रार्थे तत्तत्पदप्रतिपाद्यत्वसम्भवेन तत्तत्पदघटितपदार्थपदव्यवहारवारणाय वृत्त्येति; इत्यपि न शङ्कनीयम्,

तत्र तत्र तत्तत्पदानां तात्पर्य्यादिविरहेणैव शाब्दबोधाजननेन तदापत्त्यसम्भवेन वृत्त्येत्यस्यानावश्यकत्वाद्, वृत्तिस्वरूपादिनिरूपणे पदार्थपदव्यवहारविषयनिर्वचनस्यानाकाङ्क्षितत्वेनार्थान्तरापत्तेश्च,

एतेन 'घटादिपदे गगनादेः समवेतत्वादिसम्बद्धे ज्ञानाद् गगनाद्युपस्थितितो गगनादेः शाब्दबोधवारणाय वृत्त्येति' इति केषाञ्चित्प्रलापोऽनादेयः।

तज्जन्यशाब्दबोधं प्रति वृत्त्येत्यादिवाक्यस्याप्रतिबन्धकत्वाच्चेत्यलं विस्तरेण।

वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभिधीयते । इदम्पदमिममर्थं-बोधयत्विति; अस्माच्छब्दादयमर्थो बोद्धव्य इति वेच्छा; सङ्केतरूपा वृत्तिः ।

तत्राधुनिकसङ्केतः परिभाषा; तया चार्थबोधकं पदं पारिभाषिकं यथा शास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम् ।

---

वृत्त्येति । संकेतलक्षणाऽन्यतरसम्बन्धेनेत्यर्थः ।

अभिधीयते; इत्यनन्तरं प्राचैरिति शेषः, अतो लक्षणा चेत्यस्य न तादृशगाथया विरोध इति भावः ।

ननु सङ्केतस्येच्छारूपस्य संसर्गत्वं कुतः तस्य निष्प्रतियोगिकत्वात् कुतो वा घटपदस्य सङ्केतो घटे न तु पटादावित्यादि नियमोपपत्तिरीश्वरेच्छायाः सर्व्वं प्रति तुल्यत्वाद् ? इत्यतस्तस्य विषयविशेषघटितत्वेन सप्रतियोगिकत्वं नियामकत्वञ्चोपपादयन्नाह—इदं पदमिति ।

बोधयत्वित्यत्र णिजर्थो बोधान्वयिजनकत्वं, तथा चैतत्पदविशेष्यकैतत्पदार्थविषयकबोधजनकत्वप्रकारकेच्छा तद्वाक्याभिलाप्या,

विनिगमनाविरहेणार्थविशेष्यकेच्छाया अपि तथात्वमाह—अस्माच्छब्देति ।

शब्दादित्यत्र पञ्चम्यर्थो जन्यत्वं, तस्य च बोद्धव्येत्यत्र बुधधात्वर्थेऽन्वयः, तव्यप्रत्ययार्थो विषयरूपकर्म्म तथा चैतच्छब्दजन्यबोधविषयत्वप्रकारकार्थविशेष्यकेच्छालाभः ।

इदमत्रावधातव्यं—यत्र विनिगमनाऽस्ति तत्रैकविध एव सङ्केतः प्रयोजकः, यथा पुष्पवन्तपदादौ पदविशेष्यक एव, एतस्योपलक्षणत्वेन च यत्रोभयविधसङ्केतेन न निर्व्वाहः तत्र बोधादिविशेष्यक एव प्रयोजकः यथा तदादिपदादौ ।

सङ्केतं विभजते-तत्रेति । सङ्केतमध्य इत्यर्थकम् ।

आधुनिकेति । जन्येत्यर्थः ।

परिभाषा=परिभाषापदार्थः ।

एतेन सङ्केतमात्रं शक्तिः, परिभाषा तूभयावृत्तिधर्म्मावच्छिन्नसङ्केतरूपशक्तिविशेष एवेति मतं नाभिप्रेतमिति सूचितम् ।

नन्वाधुनिकसङ्केतः परिभाषापदार्थो न वक्तुं शक्यते ? उभयावृत्तिधर्म्मावच्छिन्नसङ्केतवत्पदस्य पारिभाषिकत्वेन तत्पदसङ्केतस्यैव परिभाषात्वादित्याशङ्क्याह—तया चेति ।

ईश्वरसङ्केतः शक्तिः; तया चार्थबोधकं पदं वाचकं; यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते ।

वाच्यवाचकादिपद ईश्वरेच्छाया बोधजनकत्वेन या विषयता सैव धात्वर्थः; तस्या आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते, पदं गां वक्ति गां ब्रूते गोर्वाचकमित्यादौ कर्म्मप्रत्ययान्तेनार्थवाचकपदेन तत्तदर्थविषयकत्वरूपतत्तत्कर्म्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते; पदेन गौरुच्यते पदस्य गौर्वाच्य इत्यादौ पदनिष्ठधात्वर्थीभूततादृशाविषयतायाः परम्परया निरूपकत्वं, तच्च धात्वर्थीभूततादृशविषयतानिरूपकबोधजनकत्वप्रकारताऽन्तःपातिबोधनिष्ठविषयतानिरूपकाविषयितासम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वरूपं तादृशक्रियाकर्म्मत्वं गवादौ कर्म्मप्रत्ययेन बोध्यते ।

---

तथा च तस्य मतविशेषसिद्धत्वेन नैतन्मते दोष इति भावः । परिभाषया बोध्योऽर्थः परिभाषितः परिभाष्यो वेति ।

शक्तिं निर्वक्ति-ईश्वरसङ्केतइति ।

अत्रेश्वरपदस्य नित्यत्वपरिचायकतया नित्यसंकेतः शक्तिरित्येवार्थो-बोध्यः ।

एतेनेश्वरत्वं नित्यज्ञानवत्त्वं जगत्कर्त्तृत्वं वेति वक्तव्यम्, अतस्तद्घटितसङ्केतत्वस्य महागौरवेण वच्यादिधातोः शक्यताऽवच्छेदकत्वासम्भवेन नित्यसङ्केतः शक्तिरित्येव वक्तुमुचितं स्यादित्यपि परास्तम् ।

न चेश्वरीयत्वमनुपादेयमेवेत्यग्रिमग्रन्थविरोध इति वाच्यम् ?

तत्रापीश्वरीयत्वपदस्य नित्यत्वपरत्वादिति ।

गवादिशब्दानां वाचकपदप्रतिपाद्यत्वं गवादेर्वाच्यशब्दप्रतिपाद्यत्वञ्च योगेन समर्थयते-वाच्यवाचकादीति ।

पदे इत्यत्र सप्तम्यर्थो घटकत्वं, तस्य च धात्वर्थ इत्यस्य घटकधातावन्वयः, ईश्वरेच्छाया इत्यत्र षष्ठ्यर्थो निरूपितत्वं बोधजनकत्वेनेत्यत्र तृतीयायाः प्रकारतानिरूपितत्वरूपवैशिष्ट्यमर्थः, उभयञ्च विषयतेत्यत्रान्वेति, तथा चेश्वरेच्छानिरूपिता या बोधजनकत्वप्रकारतानिरूपिताविषयता सैव वाच्यवाचकादिघटकीभूतधा-

त्वर्थ इत्यन्वयबोधः,

तस्या इति । वचधात्वर्थताद्दशविषयताया इत्यर्थः ।

कर्त्तृत्वं=कर्त्तृविहितप्रत्ययेन विवक्षितम् ।

पद इत्यत्र बुधधात्वर्थबोधान्वयिविशेष्यत्वं सप्तम्यर्थः, तस्य च पारतन्त्र्येणाख्यातार्थप्रकारतायामप्यन्वयः कर्माख्यातार्थप्रकारत्वं कर्त्तृत्वमन्वेति, एवञ्च ताद्दशविषयतानिरूपितमाश्रयत्वस्वरूपं कर्त्तृप्रत्ययेन विवक्षितं, पदनिष्ठविशेष्यतानिरूपितकर्त्तृप्रत्ययजन्यबोधीयप्रकारत्वाश्रय इति शाब्दधीरिति ।

आश्रयत्वरूपमित्याद्युपलक्षणं तेन कर्त्तृविहितकृताऽऽश्रयरूपकर्त्तृबोधनेऽपि न क्षतिः ।

कर्म्मप्रत्ययान्तेन=गामित्यादिना ।

बोध इत्यत्र सप्तम्यर्थो विशेष्यत्वं; तस्य च बोध्यत इत्यत्र धात्वर्थेऽन्वयः; तथा च पदं गां वक्तीत्यादिवाक्यतो गोविषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविषयताऽऽश्रयत्ववत् पदमित्याद्यन्वयबोधः, तच्च=ताद्दशविषयतायाः परम्परया निरूपकत्वञ्च ।

तादृशेति । बोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयेत्यर्थः ।

बोधजनकत्वप्रकारतेति । बोधजनकतात्वावच्छिन्नप्रकारतेत्यर्थः ।

ननु जनकत्वप्रकारतेत्यनेनैव चरितार्थत्वे बोधेति व्यर्थमिति चेद् ?

अत्र केचिद्–बोधेति सम्पातायातमिति प्राहुः ।

परे तु–जनकत्वं नियताव्यवहितपूर्ववर्त्तित्वं, तच्च सामान्यतोऽप्रसिद्धमतो बोधेत्यावश्यकमिति व्याचक्षते ।

ताद्दशप्रकारताऽन्तःपातित्वं=ताद्दशप्रकारत्वावच्छिन्नविशेष्यतानिरूपकत्वम् ,

परे तु–ताद्दशाऽन्तःपातित्वं=ताद्दशप्रकारताव्यापकत्वं बोधाव्यवहितपूर्ववर्त्तित्वप्रकारताव्यापकत्वं बोधविषयताया अक्षतमित्याहुः ।

बोध्यत इति । तथा च पदेनेत्यादौ तृतीयाऽऽद्यर्थो धात्वर्थताद्दशविषयताऽन्वयि वृत्तित्वं, एवञ्च पदनिष्ठं यद् बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं तन्निरूपकं जनकत्वनिष्ठप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयत्वसम्बन्धावच्छिन्नं यद्विषयत्वं तदाश्रयो गौरित्यन्वयबोधः ।

पदस्य गौरित्यादिवाक्यतस्तु–पदनिष्ठा या बोधजनकत्वप्रकारताकेश्वरेच्छीयविशेष्यता तन्निरूपकजनकत्वनिष्ठविषयत्वावच्छिन्नविषयतानिरूपकबोधनिष्ठविषयतानिरूपकविषयत्वसम्बन्धावच्छिन्नविषयताऽऽ—

ईश्वरसङ्केतः शक्तिः; तया चार्थबोधकं पदं वाचकं; यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते ।

वाच्यवाचकादिपद ईश्वरेच्छाया बोधजनकत्वेन या विषयता सैव धात्वर्थः; तस्या आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते, पदं गां वक्ति गां ब्रूते गोर्वाचकमित्यादौ कर्म्मप्रत्ययान्तेनार्थवाचकपदेन तत्तदर्थविषयकत्वरूपतत्तत्कर्म्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते; पदेन गौरुच्यते पदस्य गौर्वाच्य इत्यादौ पदनिष्ठधात्वर्थीभूततादृशविषयतायाः परम्परया निरूपकत्वं, तच्च धात्वर्थीभूततादृशविषयतानिरूपकबोधजनकत्वप्रकारताऽन्तःपातिबोधनिष्ठविषयतानिरूपकविषयितासम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वरूपं तादृशक्रियाकर्म्मत्वं गवादौ कर्म्मप्रत्ययेन बोध्यते ।

---

तथा च तस्य मतविशेषसिद्धत्वेन नैतन्मते दोष इति भावः । परिभाषया बोध्योऽर्थः परिभाषितः परिभाष्यो वेति ।

शक्तिं निर्वक्ति-ईश्वरसङ्केतइति ।

अत्रेश्वरपदस्य नित्यत्वपरिचायकतया नित्यसंकेतः शक्तिरित्येवार्थो-बोध्यः ।

एतेनेश्वरत्वं नित्यज्ञानवत्त्वं जगत्कर्त्तृत्वं वेति वक्तव्यम्, अतस्तद्घटितसङ्केतत्वस्य महागौरवेण वच्यादिधातोः शक्यताऽवच्छेदकत्वासम्भवेन नित्यसङ्केतः शक्तिरित्येव वक्तुमुचितं स्यादित्यपि परास्तम् ।

न चेश्वरीयत्वमनुपादेयमेवेत्यग्रिमग्रन्थविरोध इति वाच्यम् ?

तत्रापीश्वरीयत्वपदस्य नित्यत्वपरत्वादिति ।

गवादिशब्दानां वाचकपदप्रतिपाद्यत्वं गवादेर्वाच्यशब्दप्रतिपाद्यत्वञ्च योगेन समर्थयते-वाच्यवाचकादीति ।

पदे इत्यत्र सप्तम्यर्थो घटकत्वं, तस्य च धात्वर्थ इत्यस्य घटकधातावन्वयः, ईश्वरेच्छाया इत्यत्र षष्ठ्यर्थो निरूपितत्वं बोधजनकत्वेनेत्यत्र तृतीयायाः प्रकारतानिरूपितत्वरूपवैशिष्ट्यमर्थः, उभयञ्च विषयतेत्यत्रान्वेति, तथा चेश्वरेच्छानिरूपिता या बोधजनकत्वप्रकारतानिरूपितविषयता सैव वाच्यवाचकादिघटकीभूतधा-

त्वर्थ इत्यन्वयबोधः,

तस्या इति। वचधात्वर्थताद्दशविषयताया इत्यर्थः ।

कर्त्तृत्वं=कर्त्तृविहितप्रत्ययेन विवक्षितम् ।

पद इत्यत्र बुधधात्वर्थबोधान्वयिविशेष्यत्वं सप्तम्यर्थः, तस्य च पारतन्त्र्येणाख्यातार्थप्रकारतायामप्यन्वयः कर्म्माख्यातार्थप्रकारत्वं कर्त्तृत्वमन्वेति, एवञ्च ताद्दशविषयतानिरूपितमाश्रयत्वस्वरूपं कर्त्तृप्रत्ययेन विवक्षितं, पदनिष्ठविशेष्यतानिरूपितकर्त्तृप्रत्ययजन्यबोधीयप्रकारत्वाश्रय इति शाब्दधीरिति ।

आश्रयत्वरूपमित्याद्युपलक्षणं तेन कर्त्तृविहितकृताऽऽश्रयरूपकर्त्तृबोधनेऽपि न क्षतिः ।

कर्म्मप्रत्ययान्तेन=गामित्यादिना ।

बोध इत्यत्र सप्तम्यर्थो विशेष्यत्वं; तस्य च बोध्यत इत्यत्र धात्वर्थेऽन्वयः; तथा च पदं गां वक्तीत्यादिवाक्यतो गोविषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविषयताऽऽश्रयत्ववत् पदमित्याद्यन्वयबोधः,

तच्च=ताद्दशविषयतायाः परम्परया निरूपकत्वञ्च ।

तादृशेति । बोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयेत्यर्थः ।

बोधजनकत्वप्रकारतेति । बोधजनकतात्वावच्छिन्नप्रकारतेत्यर्थः ।

ननु जनकत्वप्रकारतेत्यनेनैव चरितार्थत्वे बोधेति व्यर्थमिति चेद् ?

अत्र केचिद्-बोधेति सम्पातायातमिति प्राहुः ।

परे तु-जनकत्वं नियताव्यवहितपूर्ववर्त्तित्वं, तच्च सामान्यतोऽप्रसिद्धमतो बोधेत्यावश्यकमिति व्याचक्षते ।

ताद्दशप्रकारताऽन्तःपातित्वं=ताद्दशप्रकारत्वावच्छिन्नविशेष्यतानिरूपकत्वम्,

परे तु-ताद्दशाऽन्तःपातित्वं=ताद्दशप्रकारताव्यापकत्वं बोधाव्यवहितपूर्ववर्त्तित्वप्रकारताव्यापकत्वं बोधविषयताया अक्षतमित्याहुः ।

बोध्यत इति । तथा च पदेनेत्यादौ तृतीयाऽऽद्यर्थो धात्वर्थताद्दशविषयताऽन्वयि वृत्तित्वं, एवञ्च पदनिष्ठं यद् बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं तन्निरूपकं जनकत्वनिष्ठप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयत्वसम्बन्धावच्छिन्नं यद्विषयत्वं तदाश्रयो गौरित्यन्वयबोधः ।

पदस्य गौरित्यादिवाक्यतस्तु-पदनिष्ठा या बोधजनकत्वप्रकारताकेश्वरेच्छीयविशेष्यता तन्निरूपकजनकत्वनिष्ठविषयत्वावच्छिन्नविषयतानिरूपकबोधनिष्ठविषयतानिरूपकविषयत्वसम्बन्धावच्छिन्नविषयताऽऽ—

द्वितीयेच्छायाः सङ्केतरूपत्वे वैपरीत्यमूह्यमिति न्यायसिद्धान्तः ।

अत्र मीमांसकानुयायिनः—अपभ्रंशादपि शक्तिभ्रमेणार्थप्रत्ययात् सन्मात्रविषयके भगवत्सङ्केते तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमात्तस्यापि वाचकत्वं साधुत्वञ्च स्याद् ?

एवं लाक्षणिकगङ्गाऽऽदिपदस्योक्तयुक्त्या तीरादिवाचकत्वापत्तिः ?

---

अयाभिन्नो गौरित्यन्वयधीरिति ।

द्वितीयेच्छाया इति ।

अत्र जन्यबोधविषयत्वनिष्ठप्रकारताकेश्वरेच्छीया विशेष्यता सैव वच्यादिधात्वर्थः ।

वैपरीत्यमिति । तादृशविशेष्यतायाः परम्परया निरूपकत्वं कर्त्तृत्वं, तच्च=तादृशविशेष्यतानिरूपकविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यताकबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकजन्यतासम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वं कर्त्तृप्रत्ययेन बोध्यते, तादृशविशेष्यताऽऽश्रयत्वं कर्म्मत्वं कर्म्मप्रत्ययबोध्यमिति भावः ।

न्यायसिद्धान्त इति । न्यायग्रन्थकर्त्तृभिरभ्युपगतोऽर्थ इत्यर्थकम् ।

अत्रेति । शक्तिपदार्थजिज्ञासायामित्यर्थः ।

मीमांसकानुयायिन इति । अस्यागामिना वदन्तीत्यनेनान्वयः ।

शक्तिपदार्थं पदपदार्थयोरतिरिक्तसम्बन्धरूपं संस्थापयितुमादौ न्यायमतं दूषयति—अपभ्रंशादपीत्यादि ।

अपभ्रंशात्=शक्तिशून्यत्वे सति व्यवहाराधीनगृहीतशक्तिकाद् गाच माच इत्यादिशब्दात् ।

सन्मात्रविषयक इति । अत्र मात्रपदं कात्स्न्यार्थकं, तेन वस्तुत्वव्यापकविषयताक इत्यर्थः । सङ्केत इत्यत्र सप्तम्यर्थो विषयत्वान्वयिनिरूपितत्वम् ।

अभ्युपगमादिति । अवश्यं स्वीकरणीयत्वादित्यर्थः, अशक्यापह्नवत्वेनेति भावः ।

नन्वपभ्रंशशब्दस्य वाचकत्वाङ्गीकारे का ? क्षतिरित्यत आह—

साधुत्वञ्चेति । तच्च=शक्तिभ्रमानधीनशाब्दबोधजनकत्वं, व्याकरणनिष्पादितत्वमिति केचिद्, एवञ्च साधुभिर्भाषितव्यमित्यादिविधिविषयत्वेन यज्ञादौ तत्प्रयोगेऽनिष्टं न स्यात् प्रायश्चित्तविधेश्च वैफल्यं न स्यादिति भावः ।

यत्तु-तादृशेच्छया भगवदुच्चरितत्वं वाचकत्वम्, अपभ्रंशादयश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति नातिप्रसङ्ग इति,

तन्न-अस्मदाद्युच्चरितपदेष्वव्याप्तेः तज्जातीयत्वानिवेशेऽपि वेदस्थ-

---

दोषान्तरमाह--

एवमिति । गङ्गाऽऽदिपदानां तीरादिमुख्यार्थकत्वापत्त्या लक्षणामात्रोच्छेदापत्त्या च तस्य स्वीकर्तुमशक्यत्वादिति भावः ।

मिश्रमतं दूषयितुमुपन्यस्यति--

यत्त्विति । तादृशेच्छयेति । अस्माच्छब्दादित्याद्याकारकेच्छयेत्यर्थः । एवञ्च यादृशशब्दजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितयदर्थनिष्ठविशेष्यताकेच्छया भगवदुच्चरितत्वं यस्य यस्य तत्तत्पदस्य तत्तदर्थवाचकत्वं, तेन घटादिशब्दस्य न पटादिवाचकत्वापत्तिर्न वा गाच्शब्दाद्गमञ्चतीति क्विपि निष्पन्नस्य गणपतिप्रापकाद्यर्थस्य वृक्षार्थे तदापत्तिः, उच्चरितत्वञ्च=कण्ठताल्वाद्यभिघातजन्यत्वम्, ईश्वरस्तु सर्गादौ नियोज्यनियोजकशरीरे परिगृह्य लोकानां शब्दसङ्केतज्ञापनार्थं तादृशेच्छया साधुशब्दानेव प्रयुक्तवानिति न्यायसिद्धान्तादिति भावः ।

अपभ्रंशादयश्चेति । आदिना लाक्षणिकादिपरिग्रहः ।

तज्जातीयत्वेति । यादृशशब्दजन्यबोधविषयत्वप्रकारताकयदर्थनिष्ठविशेष्यताकेच्छया भगवदुच्चरिता यादृशानुपूर्वीमच्छब्दाः तादृशानुपूर्वीमत्त्वं तज्जातीयत्वं तदेव तदर्थवाचकत्वमिति तु फलितार्थः, तादृशानुपूर्वी चाव्यवहितोत्तरत्वसम्बन्धेन घविशिष्टाकारविशिष्टटविशिष्टाकारत्वादिरूपा घटादिपदनिष्ठा भगवदुच्चरितपद इवास्मदाद्युच्चरितपदेऽप्यस्ति,

नन्वेतादृशानुपूर्व्या अपि पूर्वपूर्ववर्णघटितत्वेनेश्वरोच्चरितानुपूर्व्या अस्मदुच्चरितपदे सत्त्वं न सम्भवतीति चेद् ?

न-अव्यवहितोत्तरत्वसम्बन्धेन घत्वावच्छिन्नविशिष्टात्वावच्छिन्नविशिष्टटत्वावच्छिन्नविशिष्टात्वादिरूपायास्तस्या भगवदुच्चरितपद इवास्मदाद्युच्चरितपदेऽपि सत्त्वे बाधकाभावात्, तस्याः स्वाश्रयाव्यवहितोत्तरवृत्तिवृत्तित्वसम्बन्धेन घत्वादिविशिष्टात्वादिरूपत्वाद्वा,

ननु तादृशानुपूर्वी चरमवर्ण एवातः पूर्ववर्णे तद्वाचकत्वानुपपत्तिरिति चेद् ?

न-तादृशतादृशोत्तरवर्णस्यैव वाचकत्वस्वीकाराद्, उत्तरोत्तरवर्णविशिष्टपूर्वपूर्ववर्णत्वस्याप्यानुपूर्वीत्वसत्वाच्चेति,

लाक्षणिकेष्वतिव्याप्तेः सादिदेवदत्तादिपदेऽव्याप्तेश्च द्वादशेऽन्हि पिता नाम कुर्य्यादिति वेदे नामपदस्य देवदत्तादिपदपरत्वेऽपि देवदत्तइत्यादिस्वरूपाणां भगवदनुच्चरितत्वात् ।

---

ननु तथाऽपि तादृशानुपूर्व्या एकवर्ण एव सत्त्वेन टशब्दो घटवाचक इतिव्यवहारापत्तिरिति चेद् ?

मैवं–वाचकपदार्थताऽवच्छेदकरूपायास्तादृशानुपूर्व्याः पारतन्त्र्येणाभेदेनोद्देश्यताऽवच्छेदके भानोपगमाद्, एवं च शुद्धटत्वे तादृशानुपूर्व्या अभेदबाधान्न तादृशव्यवहारापत्तिः, स्वावच्छिन्नप्रकारताऽवच्छेदकत्वसम्बन्धेन भानोपगमाद्वा, सूक्ष्मदोषाश्च पर्य्याप्तिनिवेशेनैव वारणीया इति ध्येयम् ।

वेदस्थलाक्षणिकेष्विति । आयुर्घृतम् आदित्यो यूप इत्यादावायुरादित्यादिपदेष्वित्यर्थः । अतिव्याप्तिरिति । आयुर्जनकादित्यसदृशप्रत्यायनेच्छया तत्तत्पदानां भगवदुच्चरितत्वेन तत्तदर्थे वाचकत्वापत्तेरित्यर्थः ।

ननु तादृशेच्छया भगवदुच्चरितत्वमित्यत्रेच्छांशे विषयतया विशेषणताऽऽपन्नपदनिष्ठजनकत्वमुपस्थितिरूपव्यापारद्वारा वाच्यम्; अन्यथाऽऽकाङ्क्षाज्ञानविधया वाक्यनिष्ठजनकतामादाय सिद्धान्तेऽपि वाक्येऽतिव्याप्त्यापत्तिरेतच्चाग्रे स्फुटीभविष्यति,

एवञ्च तद्घटकीभूतोपस्थितौ शक्यविषयतानिरूपितसम्बन्धविषयत्वाप्रयोज्यत्वनिवेशे लाक्षणिकपदेषु नातिव्याप्तिरिति यदि विभाव्यते? तदाऽप्याह—

सादीति ।

सादित्वञ्च=तत्तदर्थकतत्तत्पदजातीयपदासमानकालीनप्रागभावप्रतियोगित्वम् ।

अव्याप्तेश्चेति । देवदत्तादिपदानां पुत्रादिबोधजननेच्छया पित्रादिनोच्चारणाद् न त्वीश्वरेणेति भावः ।

ननु द्वादशेऽहनि पिता नाम कुर्य्यादिति नामकरणविधायकश्रुतौ नामपदस्य देवदत्तादिसंज्ञापरत्वं वाच्यम् ? अन्यथा तेषामलक्ष्यतयैवाव्याप्तिशङ्का न स्यादेवञ्च तेषु कुतो नेश्वरोच्चारितत्वमित्यत आह— द्वादश इत्यादि ।

नन्वाधुनिकदेवदत्तादिपदानामिदं पदमिममर्थं बोधयत्वित्याद्या-

कारकपितृसङ्केतविषयत्वेनेश्वरसङ्केतविषयत्वाभावात् तदुच्चरितत्वानिवेशपक्षेऽप्यव्याप्तितादवस्थ्यमिति ?

न च वाक्योच्चारणं प्रति बुबोधयिषाया हेतुत्वेन द्वादशेऽहनीतिवाक्यमिष्टसाधनीभूतद्वादशदिनाधिकरणकपुत्रविषयकबोधजनकत्ववन्नामविषयककृतिमान् पितेति बोधं जनयत्वितीच्छा तात्पर्य्यरूपा परमेशितुरस्ति; यतः तत्र पुत्रस्येत्यध्याहार्य्यस्य तद्घटकषष्ठ्या बोधजनकत्वरूपसम्बन्धार्थकत्वेन पुत्रविषयकबोधजनकत्वमर्थो; नामपदं देवदत्तादिसंज्ञापरं तादृशेच्छायां नाम्नि पुत्रविषयकबोधजनकत्वभानाद् देवदत्तादिपदानां वाचकत्वसम्भव इति वाच्यम् ?

तथा सति पितृसङ्केतस्य तादृशविषयत्वेन सङ्केतं विनाऽपि पितुस्तादृशनामप्रयोगेणैव कृतकृत्यताऽऽपत्तेः,

एवं यत्र द्वाद्दशाहात् पूर्व्वमन्येन पुरुषेणेदं पदमेतं पुत्रं बोधयत्विति सङ्केतितः पुत्रस्तत्र द्वादशदिवसेऽपि पित्रा पुत्रबोधजनकं देवदत्तादमिति शब्दमात्रकरणेऽपि वेदार्थसिद्धौ भगवत्तात्पर्य्योपपत्तौ च तादृशशब्दस्य वाचकत्वापत्तेः,

न च नामपदं पदजन्यबोधविषयतावत्सङ्केतपरं व्युत्पत्तिवैचित्र्याच्च तदेकदेशे तादृशविषयतायाम् अध्याहार्य्यपुत्रस्येत्यस्यार्थस्य पुत्रनिष्ठत्वस्यान्वयः कृधातोश्चाश्रयत्वमर्थः, तथा चेष्टसाधनीभूता या पुत्रनिष्ठपदजन्यबोधविषयतावदिच्छाऽऽश्रयता तदाश्रयः पितेति बोधः।

अथ वा–नामपदं पदजन्यबोधविषतावत्पुत्रविषयकेच्छापरम्, एवमीशितुस्तादृशबुबोधयिषया पदजन्यबोधविषयत्वेन पुत्रावगाहनात् सङ्केतरूपेति वाच्यम् ?

नामपदस्य देवदत्तादिपदपरत्वेऽपीति ग्रन्थासङ्गतेरिति चेद् ?

अत्र केचिद्–नामपदस्येत्यादिग्रन्थस्तु भट्टाचार्य्येणापातत उक्तः, नामपदन्तु तादृशेच्छापरमेव,

ननु यादृशानुपूर्व्या पदं यादृशरूपेणार्थश्च सङ्केतेनावगाह्यते तादृशानुपूर्व्या तादृशरूपेण च पदपदार्थयोर्वाच्यवाचकभाव एवावश्यकः, उक्तसङ्केते तु पदत्वेन देवदत्तादिशब्दानां पुत्रत्वेन तत्तदर्थानां चावगाहनाद् देवदत्तपदत्वादिना पुत्रनिष्ठतत्तज्जातिरूपेण कुतस्तयोर्वाच्यवाचकभाव इति चेद् ?

न–नामपदस्य नामत्वसामानाधिकरण्योपलक्षितधर्म्मावच्छिन्नपरत्वात्, पुत्रपदस्य पुत्रत्वादिसामानाधिकरण्योपलक्षितधर्म्मावच्छिन्नपरत्वाच्च तादृशतादृशरूपेण वाच्यवाचकत्वसिद्धेरित्याहुः ।

एवमीश्वरसङ्केतस्य शक्तित्व ईश्वरानङ्गीकर्तृमते शाब्दबोधानुपपत्तिः,

---

वस्तुतस्तु–नामपदम् इच्छाविशिष्टपदत्वसमानाधिकरणधर्म्मावच्छिन्नपरम्, अध्याहार्य्यश्च पुत्रस्येति; तत्र पुत्रपदं पुत्रत्वसमानाधिकरणधर्म्मावच्छिन्नपरं, षष्ठ्यर्थश्च बोधजनकत्वरूपसम्बन्धः तथा चेष्टसाधनीभूता या पुत्रत्वसमानाधिकरणधर्म्मवद्बोधजनकतावदिच्छावत्पदत्वसमानाधिकरणधर्म्मावच्छिन्नविषयिणी कृतिः तद्वान् पितेत्यन्वबोधः, इच्छावत्ता च स्वसमानाधिकरणकृतिप्रयोज्योच्चारणकत्वस्वसमानाधिकरणपितृत्वनिरूपितपुत्रत्वसमानाधिकरणधर्म्मावच्छिन्नविषयित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविषयताकजनकत्वत्वावच्छिन्नविषयताकपदत्वसमानाधिकरणधर्म्मावच्छिन्नविशेष्यतावत्त्वोभयसम्बन्धेन, स्वद्वयमिच्छापरम्,

अथ वा–इच्छावत्ता च स्वसमानाधिकरणकृतिजन्योच्चारणकत्वस्वावच्छेदकशरीरावच्छिन्नपितृत्वनिरूपितजन्यतावच्छरीरवत्त्वोभयसम्बन्धेन, स्वद्वयमिच्छापरं, शरीरवत्त्वञ्च स्वोत्पत्त्यधिकरणदिनावधिकद्वादशदिनाधिकरणकत्व—स्ववृत्तिपृथिवीत्वव्याप्यजात्यवच्छिन्नविषयित्वसम्बन्धावच्छिन्नप्रकारत्वं यत् तन्निरूपितबोधत्वावच्छिन्नविषयताकजनकत्वविषयताकतादृशविशेष्यतावत्त्वोभयसम्बन्धेन, स्वद्वयं शरीरपरम्,

एवञ्चेच्छाविशिष्टनाम्नो विधेयत्वेन पितुरपि तादृशसङ्केतआवश्यकः,

एतेन पितृत्वपुत्रत्वयोरननुगतत्वे वाक्यभेदापत्तिः; अनुगतत्वेऽन्यदीयपुत्रस्यान्येन नामकरणेऽपि न वेदार्थबाध इत्यपि निरस्तम्, भगवतो बुबोधयिषया पुत्रत्वसमानाधिकरणधर्म्मावच्छिन्नविषयकबोधजनकत्वस्य तादृशनामत्वसमानाधिकरणधर्म्मावच्छिन्नांऽशेऽवगाहनात् तेषां वाच्यवाचकभावसिद्धिश्चेति द्रष्टव्यम्।

विधिवाक्ये द्वादश इत्यत्रैकादश इति पाठ इति केचित्।

ईश्वरसङ्केतस्य शक्तित्वे दोषान्तरमाह–एवमिति।

ईश्वरानङ्गीकर्तृमत इति। तन्मते ज्ञाने नित्यत्वस्य कृतौ जगज्जनकत्वस्य वा बाधेन नित्यज्ञानादिमत्स्वरूपेश्वरत्वघटितज्ञानस्येच्छायां नित्यत्वबाधेन वा नित्यसङ्केतज्ञानस्यासम्भवाद् व्युत्पन्नानां शाब्दबोधानुपपत्तिरिति भावः।

अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयमेव,

एवञ्चाधुनिकसङ्केतज्ञानादपि शाब्दबोधस्तादृशसङ्केतस्य वृत्तित्वञ्च निर्व्वहति,

न चाधुनिकसङ्केतस्य वृत्तित्वे तात्पर्य्यस्यापि तथात्वप्रसङ्गः; तस्यापि बोधकत्वेन पदविषयकतया सङ्केतरूपत्वाद्, न चेष्टापत्तिः; तथा सति लक्षणास्थलेऽपि तात्पर्य्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यम् ?

यतः पदार्थोपस्थितिव्यापारकः सङ्केतो वृत्तिः, तात्पर्य्यज्ञानञ्च

---

नन्वीश्वरसङ्केतस्य शक्तित्वेऽपि शाब्दबोधं प्रति सङ्केतज्ञानत्वेन कारणत्वं वाच्यं न तु तत्रेश्वरीयत्वं प्रवेश्यते गौरवात्प्रयोजनविरहाच्च कुतस्तदनुपपत्तिरित्याशङ्कते ?

अथेति ।

एतच्च वदतो व्याघातशङ्कामात्रं, तेन पूर्व्वदोषान्तरसत्वेऽपि न क्षतिः ।

शाब्दबोधोपयोगितायामिति । शाब्दबोधकारणताऽवच्छेदककोटावित्यर्थः । एवञ्च=कारणताऽवच्छेदकतयेश्वरीयत्वस्याप्रवेशे चेत्यर्थः ।

आधुनिकसङ्केतज्ञानादपीति । तादृशसङ्केतज्ञानस्यार्थविषयकबोधजनकत्वप्रकारताकेच्छीयविशेष्यताप्रकारकपदानिष्ठविशेष्यताशालिनिश्चयत्वरूपकारणताऽवच्छेदकाक्रान्तत्वादिति भावः । वृत्तित्वं=शाब्दबोधौपयिकसम्बन्धत्वम् । निर्व्वहतीति । तथा च परिभाषात्वेन सङ्केतविभजनमपि नासङ्गतमिति । तात्पर्य्यस्यापि=तात्पर्य्यसमुदायस्यापि, तेन शक्तिज्ञानत्वेन कारणत्वपक्षेऽपीश्वरतात्पर्य्यस्य वृत्तित्वप्रसङ्गेऽपि न क्षतिः, तथा सति=तात्पर्य्यस्य वृत्तित्वस्वीकारे सति, वृत्तित्वोच्छेदेति । गङ्गायां घोष इत्यादौ गङ्गापदं तीरं बोधयत्वित्याद्याकारकवक्तृतात्पर्य्यस्य वृत्तिरूपतया तज्ज्ञानोपस्थापितस्य तीरादेः शाब्दबोधनिर्व्वाहेण किमर्थं लक्षणाया वृत्तित्वं कल्पनीयमिति, तथा च लक्षणोच्छेदरूपानिष्टापत्त्या तदिष्टापत्तेरयोगादिति भावः ।

तात्पर्य्यज्ञानस्य सङ्केतरूपवृत्तिज्ञानरूपत्वेऽपि तस्याव्यवधानेन शाब्दबोधजनकतया पदार्थोपस्थितिद्वारा जनकस्य वृत्तिज्ञानस्य कारणत्वस्याचरितार्थत्वेन स्वतन्त्रकारणत्वमावश्यकमिति समाधत्ते—यत इति । वृत्तिरिति । शाब्दबोधजनक इत्यर्थः । तथा चादौ पदपदार्थयोः

एवमीश्वरसङ्केतस्य शक्तित्व ईश्वरानङ्गीकर्तृमते शाब्दबोधानुपपत्तिः,

---

वस्तुतस्तु–नामपदम् इच्छाविशिष्टपदत्वसमानाधिकरणधर्म्मावच्छिन्नपरम्, अध्याहार्य्यश्च पुत्रस्येति; तत्र पुत्रपदं पुत्रत्वसमानाधिकरणधर्म्मावच्छिन्नपरं, षष्ठ्यर्थश्च बोधजनकत्वरूपसम्बन्धः तथा चेष्टसाधनीभूता या पुत्रत्वसमानाधिकरणधर्म्मवद्बोधजनकतावदिच्छावत्पदत्वसमानाधिकरणधर्म्मावच्छिन्नविषयिणी कृतिः तद्वान् पितेत्यन्वबोधः, इच्छावत्ता च स्वसमानाधिकरणकृतिप्रयोज्योच्चारणकत्वस्वसमानाधिकरणपितृत्वनिरूपितपुत्रत्वसमानाधिकरणधर्म्मावच्छिन्नाविषयित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविषयताकजनकत्वत्वावच्छिन्नविषयताकपदत्वसमानाधिकरणधर्म्मावच्छिन्नविशेष्यतावत्त्वोभयसम्बन्धेन, स्वद्वयमिच्छापरम्,

अथ वा–इच्छावत्ता च स्वसमानाधिकरणकृतिजन्योच्चारणकत्वस्वावच्छेदकशरीरावच्छिन्नपितृत्वनिरूपितजन्यतावच्छरीरवत्त्वोभयसम्बन्धेन, स्वद्वयमिच्छापरं, शरीरवत्त्वञ्च स्वोत्पत्त्यधिकरणदिनावधिकद्वादशादिनाधिकरणकत्व—स्ववृत्तिपृथिवीत्वव्याप्यजात्यवच्छिन्नविषयित्वसम्बन्धावच्छिन्नप्रकारत्वं यत् तन्निरूपितबोधत्वावच्छिन्नविषयताकजनकत्वविषयताकतादृशविशेष्यतावत्त्वोभयसम्बन्धेन, स्वद्वयं शरीरपरम्,

एवञ्चेच्छाविशिष्टनाम्नो विधेयत्वेन पितुरपि तादृशसङ्केतआवश्यकः,

एतेन पितृत्वपुत्रत्वयोरननुगतत्वे वाक्यभेदापत्तिः; अनुगतत्वेऽस्मदीयपुत्रस्यान्येन नामकरणेऽपि न वेदार्थबाध इत्यपि निरस्तम्, भगवतो बुबोधयिषया पुत्रत्वसमानाधिकरणधर्म्मावच्छिन्नविषयकबोधजनकत्वस्य तादृशनामत्वसमानाधिकरणधर्म्मावच्छिन्नांऽशेऽवगाहनात् तेषां वाच्यवाचकभावसिद्धिश्चेति द्रष्टव्यम्।

विधिवाक्ये द्वादश इत्यत्रैकादश इति पाठ इति केचित्।

ईश्वरसङ्केतस्य शक्तित्वे दोषान्तरमाह–एवमिति।

ईश्वरानङ्गीकर्तृमत इति। तन्मते ज्ञाने नित्यत्वस्य कृतौ जगज्जनकत्वस्य वा बाधेन नित्यज्ञानादिमत्त्वरूपेश्वरत्वघटितज्ञानस्येच्छायां नित्यत्वबाधेन वा नित्यसङ्केतज्ञानस्यासम्भवाद् व्युत्पन्नानां शाब्दबोधानुपपत्तिरिति भावः।

अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयमेव,

एवञ्चाधुनिकसङ्केतज्ञानादपि शाब्दबोधस्तादृशसङ्केतस्य वृत्तित्वञ्च निर्व्वहति,

न चाधुनिकसङ्केतस्य वृत्तित्वे तात्पर्य्यस्यापि तथात्वप्रसङ्गः; तस्यापि बोधकत्वेन पदविषयकतया सङ्केतरूपत्वाद्, न चेष्टापत्तिः; तथा सति लक्षणास्थलेऽपि तात्पर्य्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यम् ?

यतः पदार्थोपस्थितिव्यापारकः सङ्केतो वृत्तिः, तात्पर्य्यज्ञानञ्च

---

नन्वीश्वरसङ्केतस्य शक्तित्वेऽपि शाब्दबोधं प्रति सङ्केतज्ञानत्वेन कारणत्वं वाच्यं न तु तत्रेश्वरीयत्वं प्रवेश्यते गौरवात्प्रयोजनविरहाच्च कुतस्तदनुपपत्तिरित्याशङ्कते ?

अथेति ।

एतच्च वदतो व्याघातशङ्कामात्रं, तेन पूर्व्वदोषान्तरसत्वेऽपि न क्षतिः ।

शाब्दबोधोपयोगितायामिति । शाब्दबोधकारणताऽवच्छेदककोटावित्यर्थः । एवञ्च=कारणताऽवच्छेदकतयेश्वरीयत्वस्याप्रवेशे चेत्यर्थः ।

आधुनिकसङ्केतज्ञानादपीति । तादृशसङ्केतज्ञानस्यार्थविषयकबोधजनकत्वप्रकारताकेच्छीयविशेष्यताप्रकारकपदानिष्ठविशेष्यताशालिनिश्चयत्वरूपकारणताऽवच्छदकाक्रान्तत्वादिति भावः । वृत्तित्वं=शाब्दबोधौपयिकसम्बन्धत्वम् । निर्व्वहतीति । तथा च परिभाषात्वेन सङ्केतविभजनमपि नासङ्गतमिति । तात्पर्य्यस्यापि=तात्पर्य्यसमुदायस्यापि, तेन शक्तिज्ञानत्वेन कारणत्वपक्षेऽपीश्वरतात्पर्य्यस्य वृत्तित्वप्रसङ्गेऽपि न क्षतिः, तथा सति=तात्पर्य्यस्य वृत्तित्वस्वीकारे सति, वृत्तित्वोच्छेदेति । गङ्गायां घोष इत्यादौ गङ्गापदं तीरं बोधयत्वित्याद्याकारकवक्तृतात्पर्य्यस्य वृत्तिरूपतया तज्ज्ञानोपस्थापितस्य तीरादेः शाब्दबोधनिर्व्वाहेण किमर्थं लक्षणाया वृत्तित्वं कल्पनीयमिति, तथा च लक्षणोच्छेदरूपानिष्टापत्त्या तदिष्टापत्तेरयोगादिति भावः ।

तात्पर्य्यज्ञानस्य सङ्केतरूपवृत्तिज्ञानरूपत्वेऽपि तस्याव्यवधानेन शाब्दबोधजनकतया पदार्थोपस्थितिद्वारा जनकस्य वृत्तिज्ञानस्य कारणत्वस्याचरितार्थत्वेन स्वतन्त्रकारणत्वमावश्यकमिति समाधत्ते—यत इति । वृत्तिरिति । शाब्दबोधजनक इत्यर्थः । तथा चादौ पदपदार्थयोः

साक्षादेव शाब्दबोधोपयोगि, न तु पदार्थोपस्थितिद्वारा, वृत्त्युपस्थापितपदार्थ एव प्रकरणादिना वक्तृतात्पर्य्यावधारणात् , तथा च लक्षणाया वृत्तित्वानभ्युपगमे गङ्गादिपदात्तीराद्यनुपस्थितौ तत्र तत्पदव्यक्तेस्तात्पर्य्याग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या वृत्तित्वमावश्यकम् ,

न च तात्पर्य्यग्रहार्थं लक्षणाऽधीनोपस्थितेरपेक्षितत्वेऽपि तदधीनोपस्थितित्वेन शाब्दबोधहेतुत्वे मानाभावात् तस्या वृत्तित्वासिद्धिः, लक्षणास्थले तात्पर्य्यात्मकसङ्केताधीनोपस्थितित एव शाब्दबोधनिर्व्वाहादाधुनिकसङ्केतस्थले तात्पर्य्याधीनोपस्थितेः शाब्दबोधप्रयो-

---

सम्बन्धरूपसङ्केतज्ञानं ततस्तज्जन्यपदार्थस्मरणं ततश्च शाब्दबोधः फलम् ।

ननु तात्पर्य्यज्ञानस्य पदार्थोपस्थितिद्वारा कुतो न कारणत्वं, येन लाघवं स्यात् , क्षणविलम्बस्य शपथमात्रनिर्णेतव्यत्वाद् ? इत्यत आह—

वृत्त्युपस्थापितेति ।

एवकारेण सम्बन्धान्तरज्ञानोपस्थापितव्यवच्छेदः, एवञ्च तात्पर्य्यज्ञानात् पूर्व्वं वृत्तिज्ञानजन्योपस्थितेरावश्यकत्वेन न तद्वारा तस्य जनकत्वसम्भव इति भावः ।

प्रकरणादिनेति । प्रकरणं=भोजनपरिधानादिव्यापारविशेषः, तथा च घटमानयेत्यादौ शक्यघटादिसाहचर्य्यादिसम्बन्धरूपलक्षणाग्रहात्पटाद्युपस्थितौ घटपदमिदं वक्तुः पटविषयकबोधजनकतयेच्छाविषयतावत् पटानयननिर्व्वाह्यपरिधानोद्देश्यकप्रवृत्तिप्रयोज्योच्चारणकत्वादित्याद्यनुमानादिनेत्यर्थः, आदिना मुख्यार्थबाधपरिग्रहः ।

ननु सङ्केतलक्षणाऽन्यतरसम्बन्धज्ञानाधीनोपस्थितपदार्थविषयकतात्पर्य्यज्ञानस्य शाब्दबोधहेतुत्वे विशिष्टबुद्ध्यात्मकतात्पर्य्यज्ञानस्य सम्पादकतया विशेषणस्य पदार्थस्य लक्षणाऽधीनोपस्थितेरपेक्षणेऽपि शाब्दबोधं प्रति लक्षणाऽधीनोपस्थितित्वेन कारणत्वाकल्पनात् , लक्षणायाः शाब्दबोधजनकोपस्थितिप्रयोजकत्वरूपवृत्तित्वं न सम्भवति, सम्पद्यते च तात्पर्य्यज्ञानानन्तरं तद्रूपसङ्केतग्रहाधीनोपस्थितितः शाब्दबोध इत्याशङ्कते ?

न चेत्यादि ।

जकतायाः क्लृप्तत्वादिति वाच्यम् ?

लक्षणाऽधीनपदार्थोपस्थिसत्त्वे मुख्यार्थवाधादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्य्यग्रहउपस्थित्यन्तरमन्तरेणैव तत्तदर्थानुभवस्य सर्व्वानुभवसिद्धत्वाद्, आधुनिकसङ्केतस्थले पूर्व्वसङ्केतकर्तृपुरुषवाक्यतोऽर्थविशेषे डित्थादिपदस्य सङ्केतग्रहात्तत्तत्पदेनार्थविशेषोपस्थितौ प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्य्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्त्या आधुनिकसङ्केतस्य वृत्तित्वमिति चेद्ग ?

एवमपि सङ्केतस्य सम्बन्धत्वे मानाभावेन निष्प्रतियोगिकतया

---

ननु तात्पर्य्यज्ञानाधीनोपस्थितितः शाब्दबोधस्य क चिदप्यनुदयेनानुभवविरोधात् कुतस्तत्कल्पनम् ? इत्यत आह—

आधुनिकेति । सर्व्वानुभवसिद्धत्वादिति ।

तात्पर्य्यज्ञानाव्यवहितोत्तरशाब्दबोधजननस्य सर्व्वानुभवविषयत्वेन गङ्गायां घोष इत्यादौ तात्पर्य्यज्ञानानन्तरं तीराद्युपस्थितिं प्रकल्प्य शाब्दबोधकल्पने सर्व्वानुभवविरोधः स्याद्, यत्र न सर्व्वानुभवविरोधस्तत्र क्षणविलम्बस्य स्वीकारे न दोषः, लाघवमपि साधकं तत्रैव, तथा च तदुपपत्त्यर्थं लक्षणाया वृत्तित्वमावश्यकमिति भावः ।

ननु तात्पर्य्यस्यावृत्तित्व आधुनिकसङ्केतस्य कथं वृत्तित्वम् ? इत्यत आह—

आधुनिकेति । वाक्यत इति ।

"डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृग" इति वाक्याद्, "थूरुत्याख्यौ नदी"त्यादिवाक्याच्चेत्यर्थः । अर्थविशेषे=काष्ठमयहस्त्यादौ ।

ननु शाब्दबोधकारणतायामीश्वरीयत्वानुपादान ईश्वरानङ्गीकर्त्तृमते सङ्केतकर्त्तृपुरुषवाक्यतो डित्थादिपदानां सङ्केतग्रहात् शाब्दबोधो जायतां; गवादिपदानां वेदस्थापरपदानाञ्च सङ्केतकर्त्तृपुरुषाभावात् तेभ्यः कुतः शाब्दबोध इति चेद् ?

न-पूर्व्वाचार्य्यकपिलकमलासनादीनां तत्तत्सङ्केतकर्त्तृणां वाक्यतस्तेषां सङ्केतग्रहेण वा तेभ्यः शाब्दबोधजननादिति हृदयम् ।

एवमपीति । शाब्दबोधोपयोगितायामीश्वरीयत्वानुपादानेन ईश्वरानङ्गीकर्त्तृमते शाब्दबोधसम्भवेऽपीत्यर्थः ।

तदसम्भवेन च पदार्थोपस्थापकत्वासम्भवेन वृत्तित्वानिर्व्वाहाद्.

एतेन शाब्दबोधौपयिकसम्बन्धत्वेनेश्वरसंकेतज्ञानं हेतुः, तच्च मीमांसकानामपि सम्भवति तादृशज्ञानविरोधिविपरीतज्ञानाभावादित्यपि निरस्तम् ।

यत्तु—स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वमर्थे पदसम्बन्धः; पदे चार्थस्य विपरीतः, अस्य सम्बन्धत्वमन्यथाऽनुपपत्त्या क-

---

ननु शाब्दबोधस्य पूर्व्वोक्तकादाचित्कत्वान्यथाऽनुपपत्त्या क्लृप्तस्य तस्य तत्प्रयोजकसम्बन्धत्वकल्पनमावश्यकं तस्यातिरिक्तत्वकल्पने धर्म्मिकल्पनातो हि वरं धर्म्मकल्पनेत्यादिन्यायेन गौरवमापद्यते, ज्ञानादेश्च तथात्वेऽतिप्रसङ्गः स्यादतो लाघवज्ञानादिसहकृततादृशान्यथाऽनुपपत्तिरेव तस्य सम्बन्धत्वकल्पने मानम् ? इत्यत आह—

निष्प्रतियोगिकतयेति ।

तथा च सम्बन्धत्वकल्पने सम्बन्धत्वाभावव्याप्यतया निष्प्रतियोगिकत्वज्ञानमेव बाधकमिति भावः ।

निष्प्रतियोगिकत्वं=प्रतियोगित्वनिरूपकत्वाभावः, प्रतियोगित्वञ्चानुभवसिद्धः स्वरूपसम्बन्धविशेषः, घटादाविव सङ्केतेऽपि सप्रतियोगिकत्वं नानुभवसिद्धमिति । एतेनेति । सङ्केतस्य सम्बन्धत्वाभावेनेत्यर्थः । अस्य च निरस्तमित्यनेनान्वयः । तच्चेति । शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानञ्चेत्यर्थः । मीमांसकानामिति । न्यायमते धर्म्मिणीश्वरसङ्केते, तन्मते पदपदार्थयोरतिरिक्तसम्बन्धे, तथा च धर्म्मिणि विवादेऽपि तादृशधर्म्मे विवादाभावेन तन्मतसाधारण्यादित्याशयः । तत्र बाधकाभावरूपहेतुमाह,—तादृशज्ञानेति । शाब्दबोधौपयिकसम्बन्धत्वज्ञानेत्यर्थः । स्वजन्येति । स्वं परिचायकं, तथा च जन्यत्वनिष्ठविषयताकबोधनिष्ठविषयताकविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं पदप्रतियोगिकोऽर्थानुयोगिकः सम्बन्धः ।

विपरीत इति । स्वनिष्ठेच्छीयविशेष्यतानिरूपितविषयत्वनिष्ठप्रकारताकबोधनिष्ठप्रकारताकजन्यत्वनिष्ठप्रकारताकनिरूपितत्वसम्बन्धावच्छिन्नप्रकारत्वम्, अथ वा—स्वविषयकबोधजनकत्वप्रकारताकेच्छाविशेष्यत्वं सम्बन्धः; अर्थप्रतियोगिकः पदानुयोगिक इत्यर्थः ।

अन्यथाऽनुपपत्त्या=शाब्दबोधान्यथाऽनुपपत्त्या ।

लभ्यते, एतादृशपरम्परया अपभ्रंशादिस्थले सम्बन्धत्वं न स्वीक्रियत इति तत्र तत्सम्बन्धावगाहिज्ञानं भ्रम एवेति;

तदपि तुच्छम्—अक्लृप्तस्य तादृशेच्छाविषयत्वस्य सम्बन्धतोपगमे तादृशज्ञानविषयत्वस्वसमानकालीनविषयत्वादिपरम्परया अपि विनिगमनाविरहेण सम्बन्धताप्रसङ्गात्. तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव वाच्यवाचकभाव इति वदन्ति ।

यस्तु ज्ञाने पदानां शक्तिः; न त्वर्थे, तथा च तज्ज्ञानशक्तत्वं तद्वाचकत्वं, तच्च तद्विषयकशाब्दधीजनकताऽवच्छेदकधर्म्मवत्त्वं, स च धर्म्मो वह्न्यादिनिष्ठदाहानुकूलशक्तिरिव पदार्थान्तरमेव, लाक्षणिकं-

---

न स्वीक्रियत इति । अपभ्रंशादिस्थल ईश्वरेच्छीयतादृशविषयतायाः सत्त्वेऽपि तस्याः संसर्गत्वं नाङ्गीक्रियते कल्पकाभावादित्यर्थः ।

भ्रम एवेति । अन्यानिष्ठतादृशविषयतायाः संसर्गतया भानादिति भावः ।

तादृशज्ञानविषयत्वेति । स्वजन्यबोधीयविषयत्वप्रकारताकज्ञानीयविशेष्यत्वेत्यर्थः, तादृशज्ञानविषयत्वसंसर्गत्वस्य कथञ्चिदिष्टापत्तौ समानकालीनविषयत्वस्य विभिन्नकालीनपदपदार्थयोः संसर्गत्वासम्भवादाह—आदीति । आदिना स्ववृत्त्यभावकालीनविषयत्वादेः परिग्रहः ।

एतेन पूर्वस्मिन् लाघवरूपविनिगमनासत्त्वेऽपि न क्षतिः ।

यद्यपि तादृशविषयत्वमवाचकेऽप्यस्ति तथाऽपि तन्निष्ठाविषयताया अपभ्रंशनिष्ठाया इव संसर्गत्वास्वीकारान्नातिप्रसङ्ग इति ।

मतान्तरमुत्थापयति—यस्त्विति । ज्ञाने=अर्थज्ञाने, अर्थविषयकशाब्दबोध इति तु यावत्, सप्तम्यर्थोऽनुकूलत्वं तस्य च शक्तावन्वयः । न त्वर्थ इति । न त्वर्थानुकूलेत्यर्थः ।

ननु तद्विषयकज्ञानानुकूलशक्तिमत्त्वं यदि तद्वाचकत्वं, तदा चक्षुरादेरपि घटादिवाचकत्वापत्तिः ? अत आह—तच्चेति ।—तद्विषयकेति । तद्विषयकत्वशाब्दत्वोभयधर्म्मावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकधर्म्मवत्त्वमर्थः ।

एवञ्च पटविषयकसमूहालम्बनघटविषयकशाब्दानुकूलशक्तिमादाय न घटादिपदानां पटादिवाचकत्वापत्तिः । वह्न्यादिनिष्ठदाहानुकूलेति । तैः सर्व्वत्रैव कारणे कार्य्यानुकूला सामर्थ्यरूपशक्तिः पदार्थो-

च नानुभावकमेवेति न तत्र शक्तिः, घटादिपदस्य मितिमातृविषयकधीजनकत्वेऽपि न तद्वाचकत्वं, तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वाद्, मितिमातृविषयकत्वेन च ज्ञानस्य न किञ्चित्पदशक्यता; ज्ञानसामान्यसामग्र्या एव मितिमातृभासकतया पदान्तरस्य च तदर्थभासकतया ताद्विषयकत्वस्य तत्पदजन्यताऽवच्छेदकत्वे मानाभावात्,

कार्य्यान्वितस्वार्थे पदानां शक्तिरिति वादिनां गुरूणां साक्षात्-

---

न्तरं स्वीक्रियमाणाऽपि वह्न्यादौ प्रसिद्धतया दृष्टान्ततयोक्ता, कार्यकारणभावश्च दाहादिकं प्रति तत्तदनुकूलशक्तिमत्त्वेन, तत्र कार्य्यताऽवच्छेदकं दाहत्वादिकं कारणताऽवच्छेदकञ्च तत्तच्छक्तिरेव, तत्तत्कार्य्यानुकूलत्वञ्च परिचायकं बोध्यम्।

ननु गङ्गायां घोष इत्यादौ गङ्गाऽऽदिपदानां तीरादिप्रतिपादकतया तत्र तीरादिबोधाद्यनुकूलशक्तेरावश्यकत्वेन तीरादिवाचकत्वापत्तिः? अतआह—लाक्षणिकञ्चेति। नानुभावकमेवेति। गङ्गाऽऽदिपदं न तीराद्यनुभवजनकमेवेत्यर्थः, अपि तु तत्स्मारकमेवेति, एतच्चाग्रे स्फुटीभविष्यति। मितिमातृविषयकेति। तन्मते ज्ञानमात्र एव मितिमातारौ भासेते, मितिर्ज्ञानं, माता चात्मा, तथा च घटोऽस्तीत्यादिवाक्याद् अस्तितावान् घटः; अस्तित्वेन घटमहं जानामीत्याकारकं समूहालम्बनरूपं ज्ञानं जायते, तत्र मितेः प्रकारतयाऽऽत्मनो विशेष्यतया भानमिति। तद्विषयकत्वावच्छिन्नेति। तद्विषयकत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकशक्तिमत्पदस्यैवेत्यर्थः। तद्वाचकत्वादिति। तद्वाचकत्वेन विवक्षितत्वादित्यर्थः।

ननु घटादिपदजन्यज्ञानस्य मितिमातृनियतविषयकत्वेन तादृशजन्यताया मितिमातृविषयकत्वावच्छिन्नत्वं न कुतः? अन्यथा घटादिविषयकत्वावच्छिन्नत्वमपि माऽस्त्वित्यत आह—ज्ञानसामान्येति। ज्ञानमात्र एव तद्भानाद्यभिचारादिदोषेण विशेषसामग्र्यास्तद्भानप्रयोजकत्वाकल्पनादिति भावः। पदान्तरस्य=पटादिपदान्तरस्य, तदर्थभासकतया=मितिमातृभानप्रयोजकव्याप्यतया, एतेन घटादिपदस्य मितिमातृज्ञानजनकत्वे पटादिपदान्तर्भावेण व्यभिचारः स्यात् प्रकारान्तरेण व्यभिचारवारणे महागौरवं स्यादिति सूचितम्।

गुरुमतमुपन्यस्यति—कार्य्यान्वितेति। तेषामयमाशयः—गामानय

परम्परासाधारणकार्य्यत्वविषयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यताऽवच्छेदकत्वेऽपि न घटादिपदस्य कार्य्यतावाचकत्वम्; अपि तु लिङादिपदस्यैव, तद्विषयकत्त्वावच्छिन्नेत्यत्र साक्षात्परम्परासाधारणनिरूपितत्वांशेऽविशेषणतयाऽवच्छेदकत्वस्यैव निवेशाद्,

---

गां बधानेत्यादिवृद्धव्यवहारप्रयोजकवाक्यानि सर्व्वाणि प्रवर्त्तकत्वेन लिङादिपदघटितानि ततश्च तद्व्यवहारदर्शिनः शिशवोऽपि कार्यविषयकगवाद्यर्थबोधं प्रत्येव गवादिपदानां सामर्थ्यमवधारयन्तः तस्मादुत्तरमपि कार्य्यान्वितगवादौ शक्तिज्ञानेनैव तादृशगवादिकं प्रतिपद्यन्त इति । साक्षात्परम्परासाधारणेति । तन्मते सर्व्वत्रैव शाब्दबोधे कार्यत्वभानोपपत्तये कार्य्यत्वविषयतानिरूपितघटाद्यर्थनिष्ठविषयताशालिशाब्दत्वावच्छिन्नं प्रति ज्ञायमानघटादिपदत्वेन कारणत्वमिति भावः। घटमानयेत्यादावानयनादिनिष्ठविषयतायां कार्य्यत्वविषयतायाः साक्षान्निरूपितत्वेन साक्षादिति, घटादिविषयतायां कार्य्यत्वविषयतायाः परम्परानिरूपितत्वेन परम्परेति । निरूपितत्वेनेति । अत्र तृतीयाऽर्थो घटादिविषयताऽन्वितवैशिष्ट्यं, तथा च कार्य्यताविषयतानिरूपितत्वस्य घटादिविषयताविशेषणस्य घटादिपदजन्यताऽवच्छेदकत्वावच्छेदकत्वेन तदवच्छेदकत्वं कार्य्यत्वविषयताया आवश्यकम्, एवञ्च तद्विषयत्वनिष्ठावच्छेदकताकशाब्दबोधनिष्ठजन्यताकजनकत्वं तद्वाचकत्वमिति सामान्यलक्षणे सति घटादिपदानां कार्य्यतावाचकत्वापत्तिरिति भावः।

कार्य्यत्वविषयतानिष्ठावच्छेदकतावारणाय-साक्षादिति, कार्य्यत्वत्वविषयतानिष्ठावच्छेदकतावारणाय-परम्परेति केचित्।

अपि तु लिङादिपदस्यैवेति। आदिना लोट्तव्यादिपरिग्रहः। लिङादिपदस्य तु कार्य्यतानिष्ठविषयताशालिशाब्दं प्रति हेतुतया तादृशविषयतानिष्ठावच्छेदकतायां तादृशावच्छेदकताभिन्नत्वस्य निरूपकत्वानिष्ठावच्छेदकत्वानिरूपकत्वस्य च सत्त्वान्नाव्याप्तिरिति।

निरूपितत्वांशेऽविशेषणतयेति। तथा च निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वं तल्लक्षणघटकतन्निष्ठावच्छेदकतायां विशेषणीयमिति।

न चैवं घटादिविषयतानिष्ठावच्छेदकतायामपि कार्य्यताविषयतानिष्ठावच्छेदकतानिरूपकत्वसत्त्वाद् घटादिपदानां घटादिवाचकत्वानुपपत्तिरिति वाच्यम्?

विशेष्यनिष्ठावच्छेदकत्वादौ विशेषणनिष्ठावच्छेदकत्वादिनिरूपि-

तत्वस्यैव स्वीकाराद्, न तु तन्निरूपकत्वस्य; विशेषणनिष्ठावच्छेदकत्वादौ तु विशेष्यनिष्ठावच्छेदकत्वादिनिरूपकत्वस्यैव,

न च विनिगमनाविरहेणोभयोः परस्परं निरूप्यनिरूपकभाव आवश्यक इति वाच्यम् ?

तत्स्वीकारे प्रकारताऽवच्छेदकत्वादेर्निरवच्छिन्नत्वस्य दुर्व्वचत्वापत्तेः, तस्य दुर्व्वचत्वे तु भूतलं न दण्डिमदित्यादिबुद्धिं प्रति भूतलं दण्डिमदित्यादिनिर्णयानां दण्डत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारताकत्वादिनैव प्रतिबन्धकत्वेन तदनुपपत्तेः, अन्यथा भूतलं दण्डत्वजातिमत्वत्वदित्यादिनिश्चयानामपि प्रतिबन्धकत्वापत्तेः, विशेष्यत्वानवच्छिन्नत्वस्य निरवच्छिन्नत्वत्वञ्चेत् ? कारणताऽवच्छेदकत्वादौ स्वत एव तत्सत्त्वेनावच्छिन्नावच्छेदकत्वस्य निरवच्छिन्नत्वापत्तेरित्यलं विस्तरेण ।

यदि च लाघवाद् निरूपितत्वसम्बन्धेन कार्य्यताविषयताविशिष्टघटत्वावच्छिन्नविषयताशालिशाब्दत्वावच्छिन्नं प्रति घटादिपदत्वेन कारणत्वं कल्प्यते ? तदा निरूपितत्वसम्बन्धनिष्ठसांसर्गिकावच्छेदकतानिरूपितावच्छेदकत्वानिरूपिका या तद्विषयत्वनिष्ठाऽवच्छेदकता; तन्निरूपितशाब्दत्वावच्छिन्नजन्यताकजनकत्वं तद्वाचकत्वमिति,

न चात्र यथा कार्य्यत्वविषयतानिरूपितघटादिनिष्ठविषयताशालिशाब्दत्वेन कार्य्यत्वं; तथा विनिगमनाविरहेण घटनिष्ठविषयतानिरूपितकार्य्यतानिष्ठविषयताशालिशाब्दत्वेन कार्य्यत्वं निर्वक्तुं शक्यते; एवञ्च कार्य्यत्वविषयतानिष्ठावच्छेदकताया निरूपकत्वनिष्ठावच्छेदकत्वानिरूपकत्वेन घटादिपदानां कार्य्यतावाचकत्वापत्तिर्दुर्वारेति वाच्यम् ?

विषयतात्वावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितकार्य्यताविषयतात्वावच्छिन्नावच्छेदकताभिन्नत्वे सति निरूपितत्वनिष्ठावच्छेदत्वानिरूपिका या यन्निष्ठविषयतात्वावच्छिन्नावच्छेदकता तन्निरूपितशाब्दत्वावच्छिन्नजन्यताकजनकत्वं तद्वाचकत्वमिति विवक्षणे; घटविषयतानिरूपितकार्य्यतानिष्ठविषयताशालिशाब्दत्वावच्छिन्ना या जन्यता तन्निरूपितकार्य्यताविषयतानिष्ठावच्छेदकतायां तादृशभेदासत्त्वात् ; तद्दोषविरहात्, पशुपदादीनाञ्च लाङ्गूलत्वावच्छिन्नावच्छेदकताकविषयताशालिशाब्दं प्रति हेतुत्वेन न तत्र पशुत्वादिवाचकत्वापत्तिः ।

नव्यास्तु—घटादिपदानां कार्य्यतावाचकताऽऽपत्तिरूपविनिगमनासत्त्वेन घटादिपदानां घटविषयतानिरूपितकार्य्यताविषयतावत्त्वेन कार्य्यताकल्पनायोगान्न तदापत्तिरित्याहुः ।

न च कार्य्यानुकूलशक्तेः स्वरूपसत्या एव कार्य्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनोऽर्थे पदस्य वृत्तिरूपशक्त्यन्तरस्य स्वीकार आवश्यक इति वाच्यम् ?

दाहादिकार्य्ये वन्ह्यादिनिष्ठशक्तेः स्वरूपसत्या एवोपयोगित्वेऽपि शाब्दबोधानुकूलशक्तेः शाब्दबोधे पदार्थोपस्थितौ च ज्ञातोपयोगित्वोपगमे बाधकाभावाद्, अतीतानागतपदज्ञानादपि शाब्दबोधोत्पत्त्या पदानामहेतुत्वेन तत्र हेतुताऽवच्छेदकशक्त्यसम्भव इति तु न शङ्क्यम्, तन्मते पदानां नित्यत्वाद्,

---

परे तु—कार्य्यताविषयताऽन्तःपातिविषयतानिरूपितत्वातिरिक्तनिरूपितत्वानवच्छिन्नत्वमधिकं जन्यताऽवच्छेदकतायां निवेशनीयं; नातो घटविषयतानिष्ठावच्छेदकताकनिरूपितत्वनिष्ठावच्छेदकताककार्य्यतात्वावच्छिन्नविषयतानिष्ठावच्छेदकताकजन्यतानिरूपितजनकत्वमादाय घटादिपदानां कार्य्यतावाचकत्वापत्तिः, एवं पदार्थताऽवच्छेदकविषयताऽन्तःपातिविषयतानिरूपितत्वातिरिक्तनिरूपितत्वानवच्छिन्नत्वं देयं; तेन घटपश्वादिपदनिरूपितजन्यतानिरूपितघटपश्वादिविषयतानिष्ठावच्छेदकतायां घटत्वलाङ्गूलादिविषयतानिष्ठावच्छेदकतानिरूपितत्वनिष्ठावच्छेदकताकत्वेन तत्तद्वाचकत्वानुपपत्तिरिति वदन्ति ।

स्वरूपसत्या इति । ज्ञानविषयतानापन्नाया इत्यर्थः । ज्ञातोपयोगिनः= ज्ञातानुकूलस्य । ज्ञातोपयोगित्वइति । शक्तिप्रकारकज्ञानविषयतावत्पदत्वेन स्वाश्रयत्वस्वप्रकारकज्ञानविषयत्वोभयसम्बन्धेन; अन्तिममात्रसम्बन्धेन वा शक्तिमत्त्वेन पदानां कारणत्वमिति भावः ।

बाधकेति । फलानुरोधेन कल्पितस्य दृष्टान्तवैषम्यमपि न क्षतिकरमिति भावः । नित्यत्वादिति । तथा च पदानां सर्वदैव सत्त्वेन न व्यभिचारः; तन्मते पदानां नित्यत्वेऽपि कण्ठताल्वाद्यभिघातव्यङ्ग्यत्वेन न सदा प्रत्यक्षमिति ।

अथ तादृशाभिघातानां व्यञ्जकत्वञ्च न प्रत्यक्षप्रतिबन्धकापसारकत्वं तत्प्रतिबन्धकस्य निर्वक्तुमशक्यत्वाद्, नापि तत्प्रत्यक्षे सहकारिकारणत्वं शब्दश्रोतृषु तदभिघातविरहात तन्नाशेऽपि शब्दश्रवणदर्शनाच्च ? इत्यादिदोषेण तन्न बहवो मेनिरे,

अस्तु वा तज्ज्ञानशक्त्या तस्य वाचकत्वमिति मीमांसकमतविशेषः,

अतस्तदनङ्गीकर्तृमीमांसकमतविशेषमाह-अस्तु वेति। तज्ज्ञानशक्त्येति। तत्तदर्थविषयकशाब्दं प्रति तदनुकूलशक्तिप्रकारकपदविशेष्यकज्ञानत्वेन हेतुत्वं बोध्यं, प्रकारता चात्र स्वाश्रयविषयत्वसम्बन्धावच्छिन्ना,

एतन्मते घटादिवाचकत्वं हि घटादिशाब्दबोधजनकताऽवच्छेदकीभूतशक्तिप्रकारतानिरूपकज्ञानीयविशेष्यतावत्पदत्वं न तु तादृशशक्तिमज्ज्ञानविषयत्वं; येन समूहालम्बनज्ञानमादायोदासीनेऽतिव्याप्तिः स्यात्, तन्निवेशे चोदासीने तादृशज्ञानीयविशेष्यत्वाभावान्न तदापत्तिः,

अथ वा-यद्विषयकशाब्दानुकूलशक्तिमत्त्वं यादृशानुपूर्व्यवच्छिन्नविशेष्यताकत्वव्यापकं तादृशानुपूर्वीमत्त्वं, यादृशानुपूर्व्यवच्छिन्नविशेष्यताकत्वव्यापकत्वनिवेशाद् न समूहालम्बनज्ञानमादायोदासीनेऽतिव्याप्तिः।

ननु कादिशब्दघटितबकादिशब्दानां ज्ञाने प्रजापत्यादिशाब्दबोधानुकूलशक्तिसत्त्वेन प्रजापत्यादिवाचकत्वापत्तिर्दुर्वारैवेति यदि विभाव्यते ?

तदा तादृशशक्तौ यादृशानुपूर्वीघटकविशिष्टान्तररूपावच्छिन्नविशेष्यताकत्वाव्यापकत्वमपि निवेशनीयम्; एवञ्च प्रजापत्यादिबोधानुकूलशक्तौ बकत्वरूपानुपूर्वीघटकविशिष्टान्तरं यत् कत्वादिरूपं तद्रूपावच्छिन्नविशेष्यकत्वाव्यापकत्वविरहाद्, यत्रैकमेव रूपं वाचकताऽवच्छेदकं तत्रान्त्यं विशेषणं न देयम्, अवच्छेदकभेदे लक्षणस्य भिन्नत्वात्, पूर्वोक्तस्यानुपगमेनैव वारणीयं वा,

यत्तु-तादृशशक्तिमज्ज्ञाने शक्तिविशिष्टशक्तिमदन्यत्वं निवेशनीयं, शक्तिवैशिष्ट्यञ्च-स्वसामानाधिकरण्यस्वभिन्नत्वस्वव्यापकत्वैतत्त्रितयसम्बन्धेन, सर्वत्र स्वं शक्तिरेव, तत्र ज्ञानान्तरनिष्ठशक्तिवैशिष्ट्यस्य शक्तिमात्रे सत्त्वादसम्भवः शक्तिमात्रे स्वात्मकशक्तिवैशिष्ट्यस्य सत्त्वात्तद्दोषश्च स्यादतः प्रथमद्वितीयसम्बन्धौ; घटादिपदज्ञानस्य तद्घटकवासुदेवादिवाचककाकारादिपदविषयकतयाऽव्याप्तिः स्याद्; अतस्तृतीयसम्बन्धस्य प्रवेशः; घटपटादिपदविषयकसमूहालम्बनज्ञानस्य शक्तिविशिष्टशक्तिमत्त्वान्न पटादिपदस्य घटादिवाचकत्वापत्तिरिति;

तदसद्-घटादिविषयकशाब्दबोधानुकूलशक्तेर्घटकलसादिपदज्ञानसाधारणतयोक्तत्रितयसम्बन्धेन पितामहादिविषयकशाब्दानुकूलक-

न चासौ विचारसहः; यतस्तन्मते लाक्षणिकस्याननुभावकत्वं दुर्घटं; पदार्थोपस्थितिद्वारा शक्यार्थानुभवे शक्तस्येव लक्ष्यार्थबोधे लाक्षणिकस्यापि हेतुतया दुर्व्वारत्वात् तत्रापि शक्तेरावश्यकतया वाचकताऽऽपत्तेः पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्यापि तथात्वापाताद्,

न चानुभावकताऽवच्छेदकशक्त्यभावाल् लाक्षणिकस्य नानुभावकत्वसम्भवः तर्हि वाक्यार्थघटकार्थान्तरवाचकमेव पदं स्वार्थस्येव तदन्वयप्रतियोगिलक्ष्यार्थस्याप्यनुभावकमुपेयत इति वाच्यम् ?

एवं सति गङ्गायां घोष इत्यादौ घोषादिपदस्यापि गङ्गातीरादिरूपार्थानुभावकताऽवच्छेदकशक्तिमत्त्वेन तद्वाचकत्वापत्तेः; लाक्षणिकस्याननुभावकत्वे शक्तपदाघटितधूमादित्यादिहेतुवाक्यादन्वयानुपपत्तेश्च, तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्षणिकत्वाद्,

---

लसादिपदघटककाकारादिपदज्ञाननिष्ठशक्तिवैशिष्ट्येनाव्याप्तेर्दुर्वारत्वाद्, ज्ञानभेदेन शक्तेर्भेदस्वीकारे तत्तदनुकूलशक्तित्वस्याखण्डस्यावश्यकतया गौरवापत्तेरतिव्याप्तितादवस्थ्याच्चेति ।

तन्मतं दूषयितुमारभते—न चासाविति । विचारसह इति । विचारसिद्ध इत्यर्थः । तत्रापीति । लाक्षणिकगङ्गाऽऽदिपदेऽपीत्यर्थः । पदार्थोपस्थित्येति । शाब्दबोधात् पूर्व्वं पदार्थोपस्थितेरावश्यकत्वेन चरितार्थतया तज्जनकजनकतया शाब्दं प्रति पदज्ञानमन्यथासिद्धमिति भावः । वाक्यार्थेति । वाक्यार्थघटकीभूतं यदर्थान्तरं तद्वाचकं घोषादिपदमित्यर्थः । स्वार्थस्येवेति । तथा च तीरान्वितघोषविषयकशाब्दं प्रति वृत्तिज्ञानजन्यतीरोपस्थितिसहकारेण ज्ञायमानघोषपदत्वेन तज्ज्ञानत्वेन वा कारणत्वं कल्पनीयमिति भावः । तद्वाचकत्वापत्तेरिति । तीरान्वितघोषवाचकत्वापत्तेरित्यर्थः ।

ननु पदान्तरजन्योपस्थित्यप्रयोज्यतदर्थनिष्ठविषयताशालिशाब्दजनकताऽवच्छेदकशक्तिमत्त्वं तद्वाचकत्वं वक्तव्यं; तथा च तीरनिष्ठविषयताया गङ्गाऽऽदिपदान्तरजन्योपस्थितिप्रयोज्यतया न तद्वाचकत्वापत्तिः? इत्यत आह—लाक्षणिकस्येति । ज्ञायमानलिङ्गस्य करणत्वमते पञ्चम्या वा ज्ञानजन्यज्ञानविषयत्वार्थकत्वे धूमपदस्य लक्षणाऽनावश्यकीत्यत आह—आदीति । आदिना गुणिपरशुक्लादित्यादिहेतुवाक्यपरिग्रहः । ज्ञाप्यत्वे लाक्षणिकत्वादिति । पञ्चम्या जन्यत्वेऽवधित्वेऽवधिमत्त्वे वा, शक्ततया

अथ लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः; अपि तु स्मृतस्य तस्य समभिव्याहृतपदार्थैरसंसर्गाग्रहमात्रं, तथा च नानुपपत्तिः,

न च लक्ष्यार्थस्य शाब्दबोधविषयत्वानुपगमे तदुपरागेण शृणोमीत्यनुव्यवसायानुपपत्तिरिति वाच्यम् ?

इष्टत्वाद्, विधेयोपरागेणैव तथा प्रत्ययात् लक्ष्यार्थस्य शाब्दबोधविषयत्वेऽपि तस्य विधेयतया भानानभ्युपगमाद् "विधौ न परः शब्दार्थ" इति सिद्धान्तादिति चेद् ?

न—मञ्चाः क्रोशन्तीत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः शाब्दबोधविषयताया आवश्यकत्वाद्, अन्यथा पूर्वाननुभूतस्य पुरु-

---

गुरुणि तत्र लक्षणैवेति भावः। प्रवेश इत्यस्य विषयत्वमर्थः, तथा च लक्ष्यार्थस्य शाब्दबोध एव न जायते कुतो गङ्गाऽऽदिपदानां तीरादिवाचकत्वापत्तिरिति भावः।

ननु लक्ष्यार्थस्य यदि शाब्दबोधो न भवति तदा शुक्लं घटमानयेत्यादिवाक्यात् कथं शुक्लघटानयनादौ प्रवृत्तिः ? इत्यत आह—स्मृतस्येति। समभिव्याहृतेति। घटघोषादावित्यर्थः। असंसर्गाग्रहमात्रं=बाधनिश्चयाभावमात्रं, मात्रपदेन घटतीरादिविषयतायां शुक्लादिविषयतानिरूपितत्वव्यवच्छेदः, तथा च तत्तत्पदार्थस्मृतिबाधनिश्चयाभावादिसहकृतस्येतरांशविशिष्टबोधस्यैव स्वातन्त्र्येण प्रवृत्त्यादिहेतुत्वाद्, उत्तरकालमानसतादृशविशिष्टबोधेनैव वा तत्र तत्र प्रवृत्त्यादिर्जायत इति भावः।

ननूक्तरीत्या भवतु तत्र तत्र प्रवृत्तिः; किन्तु गङ्गायां घोष इत्यादिवाक्यश्रवणानन्तरं तीरादिकं शाब्दयामीत्याद्यनुव्यवसायो जायते स चानुपपन्नः ? इत्याशङ्कते-न चेति। उत्तरयति—इष्टत्वादिति। इष्टापत्तौ युक्तिमाह—विधेय इत्यादि। उपरागेण=प्रकारत्वेन, तथा च विधेयताऽऽत्मप्रकारत्वेनेति यावद्, लक्ष्यार्थस्य विधेयत्वेनाभाने जैमिनिसूत्रं प्रमाणमाह—"विधौ ने"ति। अत्र भावसाधितेन विधिशब्देन विधेयित्वं बोध्यते, सप्तम्यर्थो निरूपकत्वं, परः=शक्यभिन्नः; लक्ष्यार्थ इति यावत् तथा च लक्ष्यार्थो न विधेयितानिरूपकः न विधेयो भवतीति तु यावद्। अन्यथेति। लक्ष्यार्थस्य शाब्दबोधाविषयत्व इत्यर्थः। प्रतीत्य-

षादेः प्रतीत्यनिर्व्वाहाद्व; अननुभूतस्य स्मरणासम्भवात् समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्यादेः कार्य्यकारणभावमभ्युपगच्छतां मीमांसकानां शाब्दबोधे योग्यताबलादपूर्व्वपदार्थस्य भानेन लक्ष्यार्थस्य शाब्दानुपगमेऽपूर्व्वस्यापि तस्य प्रतीत्युपपत्तिरिति तद्विषयकशाब्दत्वावच्छिन्नं प्रति शक्तिविशेषपुरस्कारेण तद्वाचकपदस्य तज्ज्ञानस्य वा न हेतुतासम्भवः, विशिष्य तत्तत्पदार्थान्विततत्तदर्थबोधे तत्तत्पदसाकाङ्क्षतत्तत्पदज्ञानत्वेनावश्यक्लृप्तकारणतयैवोपपत्तावीदृशकार्य्यकारणभावस्य निर्य्युक्तिकत्वाद्व ।

इदन्तु तत्त्वं-तीरादौ गङ्गाऽऽदिपदजन्यबोधविषयत्वसत्त्वेऽपि तदंशे

---

निर्व्वाहादिति । लक्ष्यार्थस्य सामान्यप्रतीतिस्तु भवताऽपि स्वीकारादिति,

ननु तस्य स्मरणात्मकप्रतीतिरेव कुतो न भवेदिति ? अत आह, अननुभूतस्येति ।

ननु मञ्चस्थपुरुषस्य पूर्व्वाननुभूतत्वेन स्मरणासम्भवे शाब्दबोधस्वीकारे तत्र तस्य कुतो भानं वृत्त्यनुपस्थितत्वादिति ? अतस्तस्य शाब्दबोधे भानं तन्मते सम्पादयति-समानप्रकारकत्वेति । तथा च तद्धर्म्मप्रकारकशाब्दं प्रति वृत्तिज्ञानजन्यतद्धर्म्मप्रकारकोपस्थितित्वेन कारणत्वं कल्प्यते; न तत्र धर्म्मिविषयताप्रवेश इति, योग्यतावशात्=तदन्वयीतरपदार्थसम्बन्धाबाधवशात् । अपूर्व्वस्यापि=पूर्व्वाननुभूतस्यापि । तस्येति। मञ्चस्थपुरुषादेरित्यर्थः । प्रतीत्युपपत्तिरिति । तथा च लाक्षणिकगङ्गाऽऽदिपदस्य वाचकत्वापत्तेर्दुर्व्वारत्वमिति भावः। शाब्दबोधं प्रति ज्ञायमानपदस्य तज्ज्ञानस्य वा स्वातन्त्र्येण कारणताखण्डनेन पदानां तज्ज्ञानानां सामर्थ्यरूपां शक्तिं निरासयति-तद्विषयकेति । निर्युक्तिकत्वादिति । अयं भावः-निराकाङ्क्षपदजन्यशाब्दबोधानुत्पत्त्या तद्वारणाय साकाङ्क्षपदसमूहरूपवाक्यज्ञानत्वेन साक्षात्कारणत्वं तन्मतेऽप्यावश्यकम्, एवञ्च वृत्तिज्ञानजन्योपस्थितेरेव तत्सहकारिकारणत्वेनोपपत्तौ शक्तिमत्पदज्ञानत्वेन कारणत्वान्तरं न कल्पनीयं प्रतोजनविरहादिति कुतस्तदनुकूला शक्तिः पदे तज्ज्ञाने वेति, एवञ्च सङ्केतोऽपीदं पदमेतदर्थबोधकोपस्थितिं जनयत्वित्याकारकः, अयमर्थ एतच्छब्दजन्योपस्थितेर्बोद्धव्य इत्याकारको वा बोध्य इति ।

ईश्वरसङ्केतस्य शक्तित्वपक्ष आपन्नामपभ्रंशशब्दानां वाचकतां गङ्गाऽऽदिपदानां लक्ष्यतीरादिवाचकताञ्च परिहरति-इदन्त्विति । तीरादाविति ।

शुद्धबोधविषयत्वत्वादिनैव तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छायामुपगम्यते; न तु गङ्गाऽऽदिपदजन्यबोधविषयत्वत्वादिनाऽपि तत्प्रकारकत्वं मानाभावात्, तदनभ्युपगमेऽपि तस्याः सर्व्वविषयकत्वव्याघाताभावाच्च,

न च तथा सति बोधांशे गङ्गापदजन्यत्वानवगाहितया सर्व्वविषयकत्वानुपपत्तिरिति वाच्यम्?

तीरादिनिष्ठविशेष्यतानिरूपितप्रकारताऽवच्छेदकघटकतया तदनवगाहित्वेऽपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात्, तथा च तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वस्येश्वरेच्छानिरूपिततादृशविशेष्यतावत्त्वस्य वा तत्पदशक्यतारूपतया नातिप्रसङ्गः, उक्तरीत्यैव च घटादिपदजन्यबोध·

---

आदिना गोसदृशवृक्षादिपरिग्रहः। गङ्गाऽऽदिपदेति। आदिना गोशब्दगाच्शब्दादिपरिग्रहः। शुद्धबोधविषयतात्वादिनेति। तथा च तीरं बोधविषयतावद्भवत्वित्याद्याकार एवेश्वरेच्छायाः स्वीक्रियत इति भावः। तत्प्रकारकत्वं=गङ्गाऽऽदिपदजन्यबोधविषयत्वप्रकारतानिरूपकत्वम्, अस्य चोपगम्यत इत्यनेनान्वयः। मानाभावादिति। तस्यातीन्द्रियत्वेन प्रत्यक्षस्याग्राहकत्वात् तादृशशब्दस्य चासत्त्वात् प्रत्युतानिष्टापत्तिभिया तत्कल्पनासम्भवाच्चेति भावः, तेन चेश्वरेच्छाया नित्यैकतया विनिगमनाविरहेण च सर्व्वविषयकत्वमवश्यमङ्गीकार्य्यमिति न्यायसिद्धान्तोऽपि न व्याहन्यत इत्याह—तदनभ्युपगम इति। तथा सतीति। शुद्धबोधविषयतात्वादिनेश्वरेच्छायां तादृशविषयत्वावगाहनमात्रस्वीकारे सति। स्वातन्त्र्येणेति। विशेषणताऽनवच्छेदकतयेत्यर्थः। तदवगाहित्व इति गङ्गाऽऽदिपदजन्यत्व इत्यर्थः। तथा च बोधो गङ्गाऽऽदिपदजन्यो भवत्वित्याकारोऽपीश्वरेच्छायाः स्वीक्रियत इति भावः; तथा च शक्यशक्तस्थलमात्र एव तादृशविशिष्टविषयतात्वेनावगाहनस्वीकारे च।

ननु तादृशसम्बन्धेनेश्वरेच्छायाः शक्यतात्वे घटपदशक्यत्वं घटे न तु पट इत्यादिव्यवहारानुपपत्तिः, वृत्त्यनियामकतादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः सम्बन्धान्तरावच्छिततादृशशक्यत्वाभावस्य तु घटेऽपि सत्त्वेन; घटे न घटपदशक्यत्वमित्याद्यिव्यवहारापत्तिरिति? अत आह—इच्छानिरूपितेत्यादि। नातिप्रसङ्ग इति। पटादौ

विषयस्य घटान्वितकर्म्मत्वान्वितानयनादेर्घटादिसंसर्गस्य च तादृश-
बोधविषयत्वप्रकारकेश्वरेच्छाविषयत्वेऽपि घटादिपदावाच्यत्वमुपपा-
दनीयम् ।

---

घटादिपदशक्यत्वप्रसङ्गो नेत्यर्थः ।

नन्वेतावता माऽस्तु गङ्गाऽऽदिपदानां तीरादिवाचकत्वापत्तिः; कि-
न्तु घटमानयेत्यादिवाक्यजन्यबोधस्यापि घटादिपदजन्यतया कर्म्म-
त्वाद्यंशे घटादिपदजन्यबोधविषयत्वेनेश्वरेच्छाया अवगाहनाद्, घ-
टादिपदानां कर्म्मत्वादिवाचकत्वापत्तिर्दुर्वारैवेति ? अत आह—उक्तरीत्यैव
चेति । कर्म्मत्वाद्यंशे शुद्धविषयतात्वादिना तादृशेच्छीयप्रकारत्वस्यो-
पगमेन; न तु घटपदजन्यबोधीयविषयतात्वेनेत्यर्थः ।

ननु तीराद्यंशे बोधविषयतात्वेन बोधाद्यंशे च गङ्गाऽऽदिपदजन्यता-
त्वेनेश्वरेच्छाया नानाविषयकत्वकल्पनापेक्षया पदपदार्थयोरातिरिक्तस-
म्बन्धकल्पने लाघवं, तथा च मीमांसका एव विजयेरन्निति चेद् ?

न—तीराद्यंशे गङ्गाऽऽदिपदजन्यबोधविषयतात्वेन तदिच्छीयविषय-
त्वकल्पने बोधाद्यंशे विशेष्यत्वप्रकारताऽवच्छेदकताऽऽत्मकविषयताद्व-
यप्रसक्त्या महागौरवाद्, मीमांसकमतापेक्षयेश्वरस्येच्छायास्तद्विषयत्वा-
देश्च कल्पनन्तु युक्त्यन्तरेणैव न त्वेतदनुरोधेनेति ।

अथ तथाऽपि विनिगमनाविरहेण तत्तत्पदजन्यबोधविषयतात्वेने-
श्वरेच्छीयविषयतावदीश्वरज्ञानीयतादृशविषयता तत्तत्पदशक्यत्वमस्तु,

न च भगवद्विद्वेषिमीमांसकानामपि शाब्दबोधोत्पत्तिनिर्व्वाहाय
शाब्दबोधकारणताऽवच्छेदककोटावीश्वरीयत्वमनुपादायाधुनिकसङ्के-
तज्ञानसाधारणकारणत्वस्यावश्यकत्वेन तादृशज्ञानस्य शक्यत्वत्वे तद-
नुपपत्तिरितिवाच्यम् ?

आधुनिकतादृशज्ञानस्यापि शाब्दबोधोपयोगित्वस्वीकारे क्षतिविर
हाद् आधुनिकसङ्केतस्य परिभाषात्ववदाधुनिकतादृशज्ञानस्य परिभा-
षात्वाङ्गीकाराच्चेति चेद् ?

न—आधुनिकतादृशज्ञानस्य परिभाषात्वस्वीकारे गवादिवाचकप-
दानां नदीवृद्ध्यादिपदानाञ्च सर्व्वपुरुषान्तर्भावेण पारिभाषिकत्वापत्तेः;
भ्रमतादृशज्ञानमादायान्यार्थेऽपि पारिभाषिकत्वापत्तेश्चेति,

नन्वेवमपि वेदस्थलाक्षणिकायुःपदादेरायुर्जनकादिवाचकत्वापत्ति-
र्दुर्वारा; आयुःपदादेरायुर्जनकबोधकत्वेन भगवतो बुबोधयिषयाऽवगाह-
नादिति चेद् ?

अन्विताभिधानवादिनस्तु—पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्व्वन्ति; तन्मत इतरान्वितघटो घटपदशक्य इत्येतादृशमेव शक्तिज्ञानं-शाब्दबोधप्रयोजकं घटो घटपदवाच्य इत्याकारकस्यान्वयांशानन्तर्भावेण शक्तिग्रहस्य तथात्वे च वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधविषयताऽनुपपत्तेः,

न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात् प्राक् शक्तिग्रह एव दुर्घटोऽनुपस्थितत्वादिति वाच्यम् ?

---

न—आयुःपदमिदमायुर्जनकं बोधयत्वित्याकारकभगवदिच्छयाऽऽयुः पदादेरिदन्त्वेनावगाहनेन शक्यताघटकपदनिष्ठविषयताया इदन्त्वानवच्छिन्नत्वेन विशेषणाद्, वाचकगवादिपदशक्यताघटकविषयता तु गकारोत्तरौकारादिरूपानुपूर्व्यवच्छिन्नैवातो नासम्भवः,

अथ वा—भगवद्बुबोधयिषयाऽऽयुर्जनकत्वत्वावच्छिन्नविषयताकत्वेन बोधस्यावगाहनस्यावगमाद्, न तु बोधजनकविषयकत्वेनेत्यास्तां विस्तरः।

वृत्त्युपस्थापिता एव पदार्थाः शाब्दबोधे भासन्त इति नियमेन सम्बन्धांशेऽपि वाच्यतां स्वीकुर्व्वतां भट्टानां मतं दूषयितुमुपन्यस्यति—अन्विताभिधानेत्यादि। एतन्मत इतरान्वितघटादिविषयकशाब्दबोधानुकूलशक्तिमत्तया घटादिपदानामितरान्वितघटादिवाचकत्वम्; इतरान्वितघटादीनामपि घटादिपदनिष्ठशक्तिनिरूपितजन्यताऽवच्छेदकविषयतावत्वेन तद्वाच्यत्वम्, कार्य्यकारणभावश्च—इतरत्वोपलक्षितनिष्ठविषयतानिरूपितान्वयनिष्ठविषयतानिरूपितघटत्वावच्छिन्नविषयताकशाब्दं प्रत्यनुकूलशक्तिमत्त्वेन चेति।

ननु शक्तिज्ञानं यद्यन्वयांशं नावगाहते तदा तस्य कुत उपस्थितिः शाब्दबोधे प्रवेशश्चेत्यतोऽन्वयांशं शक्तिज्ञानेऽन्तर्भावयन् ज्ञानाकारं दर्शयति—इतरान्वितेति। इतरान्वयविशिष्टेत्यर्थः, तथा च वैशिष्ट्यमर्य्यादया तादृशज्ञानस्यापरान्वयांशेऽपि पदनिष्ठशक्तिनिरूपितजन्यताऽवच्छेदकशाब्दबोधीयसांसर्गिकविषयतारूपशक्यत्वावगाहनमिति

नन्वितरपदेनात्र घट इत्यादिवाक्यार्थघटकैतद्देशवृत्तित्वादिकं वाच्यं; तथा च तादृशेतरान्वितघटादेर्वाक्यादेव प्रतिपत्तिरिन्द्रियाद्यसन्निकृष्टत्वादेवञ्च कुत इतरान्वितघटादेः शाब्दबोधात् पूर्व्वं ग्रहः; अग्रहे च कुतस्तादृशशक्तिग्रहः; धर्म्मिग्रहाभावाद् ? इत्याशङ्कते—न चेत्यादि।

विशेषतः पदार्थान्तरघटितस्य तदन्वितघटादिरूपवाक्यार्थस्य प्रागनुपस्थितावपीतरपदार्थत्वादिना सामान्यधर्म्मप्रकारेण तद्घटितस्य तदन्वितघटादेः प्रागुपस्थितिसम्भवेन तत्र शक्ति ग्रहस्य सुघटत्वाद्,

वस्तुतस्तु-पदार्थान्तरमनन्तर्भाव्य केवलान्वयांशान्तर्भावेण शक्तिग्रहस्य शाब्दधीप्रयोजकतोपेयते, पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेण शक्तिग्रहस्यानुपयुक्तत्वाद्,

न चान्वयस्य पदवाच्यत्वे तदंशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानाभाव इति वाच्यम् ?

---

दुर्घट इति । असम्भवीत्यर्थः । एतद्दशवृत्तित्वान्वितघटादेः प्रागनुभवासम्भवेऽपि किञ्चित्पदार्थान्वितघटादेर्वृद्धव्यवहारादितः प्रागनुभूतत्वेनेतरत्वादिसामान्यधर्म्मेणेतरान्वितघटादेर्मनसैव सुग्रहसम्भवादिति समाधत्ते—विशेषत इत्यादि ।

इतरपदार्थस्य पदान्तरलभ्यतया तदन्तर्भावेण शक्तिकल्पने प्रयोजनविरहो गौरवञ्चेत्यतस्तदंशं परित्यजन्नाह-वस्तुतस्त्विति । केवलान्वयांशेति । तथा चान्वितघटो घटपदशक्य इत्याद्याकारकशक्तिज्ञानमेव घटादिपदमन्वितघटादिबोधशक्तमित्याद्याकारकं वा ज्ञानं हेतुरिति ।

ननु तादृज्ञानेऽन्वयस्य सम्बन्धस्य केन रूपेण भानं ? सम्बन्धत्वेन; संयोगत्वसमवायत्वादिविशेषधर्म्मेण वा, तत्र नाद्यः—सम्बन्धत्वस्याभावात्; संयोगादेः शक्तिज्ञाने संयोगाद्यन्यतमत्वरूपसम्बन्धत्वेन भानोपगमे वा तेनैव प्रकारेण तज्जन्योपस्थित्या तेनैव रूपेण शाब्दबोधे भानापत्तेः संयोगत्वादिना भानानुपपत्तेश्च, नाप्यन्त्यः-घटवद्भूतलं पचति चैत्र इत्यादौ सर्व्वत्र संयोगत्वानुकूलत्वत्वादिधर्म्मेण सम्बन्धानां शाब्दबोधात् प्रागुपस्थित्यसम्भवतादवस्थ्यादिति चेद् ?

न-घटवद्गृहे गां नयेत्यादिवृद्धव्यवहारतः संयुक्तघटादावनुकूलकृत्यादौ च शक्तिग्रहोदयेन पश्चादपि तथैवोपस्थितिसम्भवाद्,

नन्वेवमपि संयोगत्वादिभेदेन घटादिपदानामपि शक्त्यानन्त्यप्रसङ्ग इति चेद् ?

मैवं-बुद्धिस्थताऽवच्छेदकत्वोपलक्षणवत् संसर्गताऽवच्छेदकत्वोपलक्षणेन तेषामनुगमाद्,

अन्वयांशे शक्तेः तादृशशक्तिग्रहे शाब्दबोधकारणत्वस्य चावगमे

तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाः सामान्यत एव क्लृप्ततया वृत्तिज्ञानादन्वयानुपस्थितौ तस्य शाब्दबोधविषयत्वासम्भवाद्, अन्वयांशे शक्तिग्रहस्य शाब्दबोधेऽवश्यापेक्षणीयत्वात्, संसर्गताभिन्नविषयतायास्तादृशोपस्थितिजन्यताऽवच्छेदकत्वे गौरवात्।

अत्र वदन्ति-सामान्यतस्तद्विषयकशाब्दबोधं वृत्तिज्ञानजन्यतदुपस्थितित्वेन न हेतुता स्वतन्त्रवृत्तिज्ञानाद्विशृङ्खलभावेनैकपदोपस्थितयोः पदार्थतत्त्वावच्छेदकयोर्विशेष्यविशेषणभावक्रमेण शाब्दबो-

---

युक्तिं प्रदर्शयितुं शङ्कते–न चेति। तद्विषयकेति। शरेण संयुनक्ति पटसमवेतो रक्त इत्यादितः वृत्त्या संयोगादेरनुपस्थितिकाले शाब्दबोधवारणाय संयोगादिविषयकशाब्दं प्रति वृत्तिज्ञानजन्यसंयोगादिविषयकोपस्थितित्वेनापि हेतुत्वं वाच्यमिति भावः।

ननु भट्टमते सामान्यलक्षणाविरहेण वृत्तिज्ञानजन्योपस्थितौ पूर्व्वानुभूता व्यक्तिरेव भासते; शाब्दबोधे त्वपूर्व्वव्यक्तिरेवातो नोक्तकार्य्यकारणभावकल्पनसम्भव इति चेत्?

सामान्यतो विषयतासम्बन्धेन तत्तत्पुरुषीयशाब्दबोधं प्रति विषयत्वस्वप्रकाराश्रयत्वान्यतरसम्बन्धेन तत्तत्पुरुषीयवृत्तिज्ञानजन्योपस्थितित्वेन कार्य्यत्वं कारणत्वञ्च कल्पनीयमित्यत्रैवोक्तग्रन्थतात्पर्य्याद् गोत्वघटत्वादौ व्यभिचारवारकं प्रथमदलं; सम्बन्धे स्वीयप्रकाराश्रयत्वनिवेशादपूर्व्वव्यक्तिसङ्ग्रहः,

न चैवमपि विषयतासम्बन्धेन कार्य्यकारणभावकल्पने पुरुषभेदेन तस्यानन्त्यापत्तिरतः समवायप्रत्यासत्त्या तद्धर्म्मप्रकारकशाब्दबोधं प्रति तद्धर्म्मप्रकारकोपस्थितित्वेन तत्कल्पनमुचितमिति वाच्यम्?

एतन्मतेऽपि धर्म्मधर्म्मिभेदेन कार्य्यकारणभावभेदाद् महागौरवापत्तेः,

एतेनानन्तधर्म्मव्यक्तिभेदेनानन्तकार्य्यकारणभावापत्त्या गोत्वादिप्रकारकशाब्दबोधे गोत्वादिप्रकारकोपस्थितेर्हेतुत्वापेक्षयाऽतीव गौरवभिया यथाश्रुतन्तु न सम्यगित्यपि निरस्तम्।

स्वतन्त्रेति। पशुपदं लोम्नि शक्तं लाङ्गूलवति च शक्तमिति धेनुपदं धानकर्म्मत्वे शक्तं गवि च शक्तमित्यादि पृथक्शक्तिज्ञानादित्यर्थः, विशृङ्खलभावेन=विशेष्यविशेषणभावानापन्नत्वेन, विशेष्येति। पदार्थता

धापत्तेः; किन्तु तद्धर्म्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्म्मावच्छिन्नद्विषयकोपस्थितित्वेनैव हेतुता वाच्या;

एवञ्च तत्संसर्गकबोधस्य किञ्चिद्धर्म्मप्रकारेण तद्विषयकत्वाभावाद् वृत्तिज्ञानात्तदनुपस्थितावपि तत्संसर्गकशाब्दबोधः सम्भवत्येव ।

---

ऽवच्छेदकप्रकारताकपदार्थनिष्ठविशेष्यताकत्वेनेत्यर्थः; वाक्यार्थमय्यादयेति भावः, तथा च तादृशोपस्थितिकाले विशिष्टबोधस्य कैरप्यस्वीकारेणेष्टापत्तेरयोग इति ।

ननु पार्थ एवेत्यादावेवशब्दात् खण्डश उपस्थितानामितरसम्बन्धाभावादीनां कथं विशिष्टबोध इति चेद् ?

न-अगत्या तत्र तत्र तादृशबोधस्येष्टत्वाद्, एवादिपदानां वा पार्थान्ययोगव्यवच्छेदार्थकत्वमत एतस्योक्तत्वादिति । तद्विषयकेति । एतच्चापातत उक्तं न तु कार्य्यकारणभावे प्रविष्टमिति ध्येयम् ।

ननु दण्डमानयेत्यादित आधेयत्वादौ निरूपितत्वसम्बन्धेन दण्डप्रकारकबोधो जायते; स च न सम्भवति तत्र दण्डादिप्रकारकोपस्थितिविरहाद्,

न च तादृशकार्य्यकारणभावस्य विशिष्यवक्तव्यतया तत्राकल्पनेन न तदनुपपत्तिरिति वाच्यम् ?

यो दण्डी पुरुषस्तमानयेत्यादौ दण्डादेः पृथगुपस्थितिकाले तच्छब्देन दण्डप्रकारेण पुरुषस्य शाब्दबोधवारणाय दण्डप्रकारकशाब्दं प्रति दण्डप्रकारकोपस्थितित्वेन कारणत्वस्यावश्यकतया दण्डी पुरुष इत्यादितः शाब्दबोधानुपपत्तेर्दुर्व्वारत्वादिति चेद् ?

न-एतद्दोषेणैव वस्तुतस्त्वित्यादिकल्पस्य वक्ष्यमाणत्वाद् ,

अथ वा—तत्र पृथगुपस्थितयोरपि दण्डपुरुषयोः शाब्दस्येष्टत्वात्तदकल्पनादिति ।

तत्संसगकबोधस्येति । तथा च संसर्गे संसर्गताऽवच्छेदके च प्रकारताऽऽख्यविषयत्वं न स्वीक्रियते; अपि तु विशेषणताऽऽत्मकविषयतेति भावः ।

के चित्तु-तन्मते संसर्गस्य स्वरूपतो भानेन न तादृशकार्य्यकारणभावाक्रान्ततेत्याहुः,

तच्चिन्त्यं—संयोगादेः स्वरूपतो भानस्यानुभवविरुद्धत्वादुक्तरीत्या परीहारसम्भवाद्, भूतलं द्रव्यवदित्यादिभूतलावच्छेद्यत्वावगाहिप्रतीतेर्भ्रमत्वापाताच्च, यावन्तः संयोगाः सन्ति तेषां प्रत्येकं संयोगव्यक्त्या निखिलभूतले सर्व्वस्यैव द्रव्यस्यैव बाधादिति ।

ननूक्तदोषवारणार्थं विशेषरूपेण तादृशकार्य्यकारणभाव आवश्यकश्चेदस्तु; तथाऽपि सामान्यतो विषयतासम्बन्धेन शाब्दबोधं प्रति विषयतासम्बन्धेन वृत्तिज्ञानजन्योपस्थितित्वेन हेतुत्वस्यान्वयव्यतिरेकसिद्धस्य सत्त्वेन संसर्गांशेऽपि वृत्तिरावश्यकी, एवकारादाविव तत्र तत्र पृथगुपस्थितयोरपि तयोर्विशेषणविशेष्यभावेन शाब्दबोधे भानन्त्वाकाङ्क्षाज्ञाननियम्यं विशेषकार्य्यकारणभावेनैव वा वारणीयमिति वा यदि कथ्यते ? तदाऽऽह-(१)वस्तुतस्त्विति ।

एतत्पाठस्य (२)पूर्व्वं क्रोडपत्रम् ।



(१) क्रोडपत्रानन्तरमारप्स्यमानमूलस्य प्रतीकग्रहणमेतद् ।

(२) स्वाभिमतक्रम एव टीकाकृता स्वाक्षरैरसूचि;

एतत्पाठस्येत्यादिना, एतच्छब्देन "वस्तुतस्त्व"त्यादिनाऽऽगामिग्रन्थोऽवधेयः ।

## क्रोड़पत्रम् ।

( [एवं तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानजन्यतदुपस्थितितल्लाक्षणिकपदज्ञानजन्यतदुपस्थित्योर्द्वयोरेव हेतुतया तयोः परस्परजन्यबोधे व्यभिचारस्य वारणाय तत्तत्कारणानन्तर्य्यस्य तत्तत्कारणजन्यताऽवच्छेदकप्रवेशध्रौव्येण पदार्थद्वयसंसर्गावगाहिबोधवृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचाराप्रसक्त्याऽन्वयस्य पदवाच्यत्वमप्रामाणिकम् ]

न च शक्तिलक्षणयोर्वृत्तित्वेनानुगमसम्भवात्तदुभयविषयकज्ञानजन्योपस्थित्योरेकरूपेणैव हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यम्?

उभयसाधारणवृत्तित्वस्यानुगतस्य दुर्व्वचत्वात् । )

यत्तु—शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणाऽधीनपदार्थोपस्थित्योरनुगमसम्भवः; घटशक्तं घटपदमित्येतादृशशक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धिशक्तं पटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपि घटादिसम्बन्धिपटादिनिरूपितशक्तिविषयकज्ञानजन्यत्वादिति नोक्तव्याभिचारप्रसक्तिः,

न च घटशक्तं घटपदमित्यादिज्ञानजन्यघटाद्युपस्थितौ यत्रोद्बो-

---

### अथ क्रोडपत्रस्य टीका ।

व्यभिचाराप्रसक्त्येति । शरेण संयुनक्तीत्यादितः संयोगादिविषयकशाब्दस्य संयोगांशे शक्तिग्रहाधीनोपस्थित्यव्यवहितोत्तरत्वरूपकार्य्यताऽवच्छेदकाक्रान्तस्य पूर्वं संयोगांशे शक्तिज्ञानसत्त्वाद् दण्डवानित्यादितः संयोगादिविषयकशाब्दे शक्तिज्ञानस्य लक्षणाग्रहस्य वाऽव्यवहितोत्तरत्वविरहेण तत्पूर्व्वं तादृशज्ञानजन्योपस्थित्यसत्त्वेऽपि न व्यभिचारसम्भव इति भावः ।

यत्त्विति—अनुगमसम्भव इति । तथा च तत्तदर्थविषयकशाब्दं प्रति शक्तिविषयकज्ञानजन्यतदर्थविषयकोपस्थितित्वेनोभयसाधारणैककारणत्वं कल्प्यमिति भावः । उद्बोधकान्तरादिति । साहचर्य्यादिरूपसम्बन्ध-

---

( ) एतच्चिन्हान्तर्गतः पाठः प्राचीनपुस्तकेषु नोपलभ्यते ।

[ ] अनयोरन्तर्गतः पाठस्तु टीकाकृता पौनरुक्त्या नानुमन्यत इति क्रोडपत्रटीकासमाप्तिलेखात्सुव्यक्तम् ।

धकान्तरात्पटादिभानं तादृशपटादिविषयकोपस्थितेरपि पटादिशाब्दबोधजनकत्वापत्तिरिति तद्विषयकशाब्दबोधे तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या; तथा च न तेन रूपेण घटसम्बन्धिशक्तं पटपदमित्यादिज्ञानजन्यघटाद्युपास्थितेः संग्रह इत्युक्तव्यभिचार एवेति वाच्यम् ?

शक्तिविषयत्वावच्छिन्नकारणताप्रतियोगिकतद्विषयत्वावच्छिन्नकार्य्यताशालित्वेनोपस्थितस्तच्छाब्दबोधहेतुतया दर्शितोद्बोधकान्तरप्रयोज्यपटादिविषयताकोपस्थितेर्निरुक्तकार्य्यताशालित्वविरहणोक्तातिप्रसङ्गानवकाशात्, तदर्थविशेषितशक्तिविषयतापर्य्यन्तस्योपस्थितिनिष्ठकारणताऽवच्छेदकेऽनिवेशादनुगमसम्भवादुक्तलक्षणाज्ञानहेतुतायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति,

तन्न समीचीनम्—उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे घटकालीना या शक्तिस्तद्वत् पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिशाब्दबोधप्रसङ्गात्, तत्कालीनशक्तिरूपपरम्परासम्बन्धविषयताऽन्तःपातिन्याः शक्तिविषयताया अपि तादृशसम्बन्धविषयताप्रयोज्यघटादिविषयताप्रयोजकत्वात्, तादृशशक्तिविषयकधियश्च घटादिनिरूपितत्वेन तत्सम्बन्धिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहितया शाब्दबोधप्रयोजकतच्छक्तपदज्ञानतल्लाक्षणिकपदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोधजनकत्वोपगमासम्भवाद्,

न च यत्किञ्चिन्निरूपितत्वोपरक्तशक्तिविषयताप्रयोज्यतत्तदर्थ-

---

ज्ञानादित्यर्थः। तदर्थविशेषितेति। निरूपितत्वसम्बन्धेन विषयत्वसम्बन्धेन वा तदर्थविशिष्टशक्तिमत्पदविशिष्टज्ञानजन्येत्यर्थः, तादृशपदवैशिष्ट्यञ्च विषयित्वसम्बन्धेन,

एतच्चान्यथाख्यात्यनङ्गीकारमतेन; तेनान्यमतसिद्धशक्तिभ्रमजन्योपस्थितेरसङ्ग्रहेऽपि न क्षतिः।

तादृशशक्तीति। घटकालीनशक्तिमत्पटपदादिविषयकधियइत्यर्थः। घटादिनिरूपितत्वेनेत्यस्य शक्त्यनवगाहितयेत्यत्र योजना, तत्सम्बन्धीति। घटादिसम्बन्धित्वोपलक्षितो यस्तन्निरूपितत्वेनेत्यर्थः। यत्किञ्चिन्निरूपि-

विषयताकोपस्थितित्वेन शाब्दधीजनकत्वोपगमान्नायमतिप्रसङ्गः; उक्तज्ञानीयशक्तिविषयतायाः किञ्चिन्निरूपितत्वविषयतानिरूपितत्वविरहादिति वाच्यम् ?

एवमपि घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदमिति ज्ञानप्रयोज्यघटाद्युपस्थितेरव्याप्तेः,

अथ किञ्चिन्निरूपितत्वविषयतानिरूपितत्वेन शक्तिविषयता यादृशकारणताऽवच्छेदिका तादृशकारणताप्रतियोगिकप्रकृतार्थविषयत्वावच्छिन्नकार्य्यताशालित्वेन पदार्थोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः; शक्त्यंश उदासीनस्य पटनिरूपितत्वादेर्भानेऽपि घटकालीनशक्तिरूपघटीयपरम्परासम्बन्धविषयकपदज्ञानस्य घटादिस्मारकतया तत्स्मृतिजनकताऽवच्छेदककोटौ पटादिनिरूपितत्वविषयतानिरूपितत्वस्य शक्तिविषयकत्वेऽनिवेशादिति चेन्न ?

---

तत्वोपरक्तेति । यत्किञ्चिन्निरूपितत्वनिष्ठविषयतानिरूपितशक्तिनिष्ठविषयतानिष्ठावच्छेदकताकजनकताकजन्यताऽवच्छेदकीभूततदर्थनिष्ठविषयताशाल्युपस्थितित्वेन तदर्थविषयकशाब्दनिरूपितजनकत्वाङ्गीकारादित्यर्थः।

निरूपितत्वविरहादितीति । घटकालीनशक्तिमत्पटपदमित्यादिज्ञानीयविषयतायां कालीनत्वविषयतानिरूपितत्वस्यैव सत्त्वादिति भावः।

ननु किञ्चिन्निरूपितत्वविषयतानिष्ठावच्छेदकताकशक्तिविषयतानिष्ठावच्छेदकताकज्ञानत्वावच्छिन्नजनकताका यदर्थनिष्ठविषयत्वावच्छिन्नोपस्थितिनिष्ठजन्यता तदर्थविषयकशाब्दं प्रति तादृशजन्यताशाल्युपस्थितित्वेन कारणत्वस्य कल्पनान्न नोक्तदोषः ? घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदमिति ज्ञाने पदे घटस्य स्वकालीनशक्तिरूपसम्बन्धावगाहित्वेन तज्ज्ञानजन्योपस्थितिनिरूपितजनकताऽवच्छेदककोटौ तत्सम्बन्धघटकस्योदासीनस्य पटनिरूपितत्वस्य विषयताया अप्रवेशादित्याशङ्कते–अथ किञ्चिदिति ।

ननु किञ्चिन्निरूपितत्वनिष्ठविशेषणताभिन्नविशेषणत्वानिरूपितशक्तिनिष्ठसंसर्गतानिष्ठावच्छेदकतानिरूपितपदनिष्ठविषयतानिष्ठावच्छेदकताका या ज्ञाननिष्ठजनकता तन्निरूपिता या तदर्थविषयकत्वावच्छिन्नजन्यता तच्छाल्युपस्थितित्वेन तदर्थविषयकशाब्दं प्रति हेतुत्वेन शक्ति-

एवमपि यत्र ज्ञाने घटादेः शक्तत्वसम्बन्धेन पदांशे प्रकारता तज्जन्योपस्थितितोऽपि घटादेः शाब्दबोधोत्पत्त्या तदनुपपत्तिदुर्व्वारैव, तत्र पदांशेऽर्थसंसर्गतया भासमानशक्तावर्थस्य निरूपितत्वरूपसम्बन्धान्तराभानाद्,

वस्तुतो घटत्वाद्युपलक्षितवाचकाद् द्रव्यादिपदाच्छक्त्याऽभ्रान्तस्य घटत्वादिप्रकारकशाब्दबोधवारणाय तद्धर्म्मप्रकारकशाब्दबोधे शक्तौ तद्धर्म्मविशिष्टनिरूपितत्वावगाहित्वेन शक्तिज्ञानस्योपयोगिता वाच्या; तथा च तत्सम्बन्धिशक्तत्वावगाहिनो लक्षणाग्रहस्य तेन रूपेणासंग्रहादननुगमेन व्यभिचारप्रसक्त्योक्तकार्य्यकारणभावे कारणानन्तर्य्यस्य प्रवेश आवश्यकः,

---

सम्बन्धेन स्वसम्बन्धिनिरूपितशक्तिसम्बन्धेन च घटवद् घटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेः संग्रहः; असंग्रहश्च स्वकालीनशक्तिसम्बन्धेन घटवत्पटपदमित्यादिज्ञानस्य, नाङ्गीक्रियते च शक्त्यादिप्रकारकज्ञानजन्योपस्थितेः कारणत्वमिति ?

अथ वा-किञ्चिद्धर्म्मावच्छिन्नविषयनिष्ठावच्छेदकताभिन्ना सती तादृशावच्छेदकताकसम्बन्धिविषयतानिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितनिरूपितत्वविषयतानिष्ठावच्छेदकताकशक्तिविषयतानिष्ठावच्छेदकताकजनकताकजन्यताशालितदर्थनिष्ठविषयताशाल्युपस्थितेः कारणतया न तद्दोष इति यदि विभाव्यते ? तदाऽऽह—वस्तुत इति ।

द्रव्यपदं घटत्वविशिष्टे शक्तमित्यादिभ्रमेण द्रव्यादिपदादपि भ्रान्तस्य घटादेरन्वयबोधो भवत्येवेत्यत आह—अभ्रान्तस्येति । तादृशभ्रमरहितस्येत्यर्थः, तथा च तदानीं तादृशबोधस्येष्टापत्तेरयोग इति भावः । तद्धर्म्मविशिष्टेति । तद्धर्म्मप्रकारकशाब्दबोधं प्रति निरूपितत्वसम्बन्धेन तद्धर्म्मविशिष्टवैशिष्ट्यापन्नशक्तिनिष्ठविषयतानिरूपितपदनिष्ठविषयताशालिनिश्चयत्वेन कारणत्वमित्यर्थः । उपलक्षितावगाहिज्ञानस्य यथा न कारणत्वं तथाऽग्रे दर्शयिष्यति । तत्सम्बन्धीति । तथा च लक्षणाग्रहे तद्धर्म्मावच्छिन्नविषयतानिरूपितसम्बन्धिनिष्ठविषयताकशक्तिनिष्ठविषयतासत्त्वेन न तस्य तादृशकारणताऽवच्छेदकाक्रान्ततेति भावः ।

एवं शक्तिज्ञानमुभयविधं विनिगमकाभावात् शाब्दबोधप्रयोजकं पदेऽर्थवाचकत्वावगाहि; अर्थे पदवाच्यत्वावगाहि च; तयोरपि नानुगमसम्भवः, वाच्यत्ववाचकत्वयोः शक्तिप्रतियोगित्वशक्त्याश्रयत्वरूपामिथोविलक्षणसम्बन्धरूपतयाऽनुगताननतिरिक्तरूपाभावात्, सम्बन्धत्वादिनाऽनुगमे तदीयकालिकादिसम्बन्धज्ञानादर्थधर्म्मिकपदवाचकतायाः पदधर्म्मिकार्थवाच्यतायाश्च ज्ञानात् शाब्दबोधापत्तेः तज्जन्योपस्थित्योरपि परस्परजन्यबोधे व्यभिचारः,

एवं लक्षणाज्ञानमपि पदेऽर्थसम्बन्धिवाचकताऽवगाहितयाऽर्थे पदवाच्यसम्बन्धिताऽवगाहितया च द्विविधशाब्दबोधप्रयोजकं तदधीनोपस्थित्योरप्यनतिप्रसक्तरूपेणानुगमासम्भवात् परस्परजन्यबोधे व्यभिचार इति कार्य्यताऽवच्छेदकगर्भे तत्कारणानन्तर्य्यप्रवेशो ध्रुव इत्यवधेयम् ।

क्रोडपत्रं समाप्तम् ।

---

द्विविधशक्तिज्ञानस्य कारणत्वानुरोधेनापि कार्य्यताऽवच्छेदककोटावानन्तर्य्यप्रवेशस्यावश्यकत्वं दर्शयति—एवमिति । सम्बन्धत्वादिनेति । सम्बन्धत्वं च विशिष्टधीजनकत्वं विशेष्यत्वप्रकारत्वान्यविशिष्टधीविषयत्वं संयोगसमवायाद्यन्यतमत्वं वा । अनुगम इति । तथा च तदर्थविषयकशाब्दं प्रति तदर्थनिष्ठविषयतानिरूपितसम्बन्धत्वसमानाधिकरणधर्म्मावच्छिन्नसंसर्गताकपदनिष्ठविषयताशालिज्ञानजन्योपस्थितित्वेन कारणत्वमिति ध्येयम्, आदिनैकज्ञानीयविषयत्वादिपरिग्रहः ।

एवं तद्विषकेत्यादि यत्त्वित्यन्तकक्रोडपत्रीयपाठस्तु न सम्यङ्; अग्रिमेण सह पौनरुक्त्यदोषग्रस्तत्वादिति ।

इति क्रोडपत्रटीका ।

[ वस्तुतस्तु शक्त्या लक्षणया चोपस्थितस्य तत्तदर्थस्य शाब्दबोधे भानादुभयविधतत्तदर्थोपस्थितेरेव तत्तद्विषयकशाब्दबोधहेतुता वाच्या; तादृशोपस्थित्योश्चानुगतानतिप्रसक्तकारणताऽवच्छेदकस्यागुरोर्दुर्व्वचतया व्यभिचारवारणाय शक्त्यादिज्ञानजन्यतदुपस्थितेर्जन्यताऽवच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेश आवश्यकः।

इत्थञ्च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रसक्त्या न किञ्चिद्बाधकमिति किं तत्र वृत्तिकल्पनेन ? ]

अथ तत्र वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे सम्बन्धभाने नियामकाभावात् सर्व्वत्राबाधितयावत्संसर्गभानापत्तिरिति चेद् ?

---

वस्तुतस्त्विति। शक्तिलक्षणाऽन्यतरत्वस्यानुगतानतिप्रसक्तस्य सुवचत्वादाह—अगुरोरिति। तथा चैकभेदविशिष्टापरभेदवद्भेदात्मकस्यान्यतरत्वस्य विशेष्यविशेषणभाववैपरीत्येन द्विविधतया तद्रूपेण कार्य्यकारणभावकल्पने गुरुधर्म्मावच्छिन्नद्विविधकारणत्वापत्तिरिति,

नन्वन्यतरत्वस्याखण्डोपाधित्वेन न गौरवं न वा विशेष्यविशेषणवैपरीत्या च कार्य्यकारणभावद्वयापत्तिरिति चेद् ?

न—तस्याखण्डोपाधित्वे मानाभावाद्, अन्यथाऽनुमित्यादिनिष्ठपरामर्शादिजन्यताऽवच्छेदककोटावव्यवहितोत्तरत्वादेः प्रवेशस्य मणिकारादिसम्मतस्यानावश्यकत्वापत्तेः,

अथ तथाऽपि शाब्दबोधौपयिकोपस्थितिजनकसम्बन्धज्ञानजन्यत्वमनुगतमिति चेद् ?

मैवं—शाब्दबोधजनकत्वघटितधर्म्मेण तज्जनकत्वनिर्व्वचन आत्माश्रयापत्तेः, शाब्दबोधं प्रति शक्तिज्ञानादेः स्वयं कारणत्वखण्डनाच्चेति भावः। इत्थञ्चेति। अनुगतरूपेण तादृशकार्य्यकारणभावासम्भवे चेत्यर्थः, यावत्संसर्गेति। द्रव्यं घट इत्यादौ द्रव्यघटयोरभेदस्येव संयोगसमवायादीनामपि भानं स्यादिति।

इदमुपलक्षणं तेन चैत्रः पचतीत्यादौ कालिकादेरपि भानसम्भवेन

---

[ ] एतच्चिन्हान्तर्गतः पाठः प्राचीनपुस्तकेषु क्रोडपत्राव्यवहितपूर्वमूलघटकतया वर्त्तते।

न-कयोश्चित् पदयोः केनचित् सम्बन्धेन स्वार्थान्वयबोधसाकाङ्क्षतयाऽऽकाङ्क्षाज्ञानस्यैव पदार्थसंसर्गभाननियामकत्वाद्, ययोः पदयोर्नानासम्बन्धेन स्वार्थान्वयबोध आकाङ्क्षा तज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्य्यज्ञानरूपकारणबलादेव सम्बन्धभाननियमोपपत्तेः; अन्वयांशे शक्त्युपगमेऽप्येकैकस्यैव पदार्थस्य संसर्गविधया क्व चित् कस्य चिद्ध भानं क्व चित् कस्य चिदभानमित्यनियमेन सामान्यरूपेणैवान्वयस्य शक्यकोटावन्तर्भावणीयतयोक्तस्यैव संसर्गभाननियामकत्वाद्,

न च संसर्गविशेषानुपस्थितौ तात्पर्य्यज्ञानासम्भवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यम् ?

---

तादृशकृत्यादिशून्येऽपि चैत्रादौ तादृशप्रयोगापत्तिरित्यपि बोध्यम् ।

कयोश्चिदिति । पचतीत्यादौ पच्यादिपदतिङादिपदयोरित्यर्थः । केन चिदिति । अनुकूलत्वादिसम्बन्धेनेत्यर्थः । आकाङ्क्षाज्ञानस्येति । अव्यवहितोत्तरत्वसंसर्गेणैकपदविशिष्टापरपदत्वज्ञानस्येत्यर्थः, तथा च पचतीत्यादौ पचादिपदविशिष्टतिबादिपदत्वज्ञानस्यानुकूलत्वसम्बन्धेनैव पाकादिप्रकारककृतिविशेष्यकबोधं प्रत्येव हेतुतया न तत्र सम्बन्धान्तरभानमिति भावः, एवमन्यत्रापि । ययोरिति । द्रव्यं घटवदित्यादौ द्रव्यघटादिपदयोरित्यर्थः, नानासम्बन्धेन=संयोगसमवायादिनानासम्बन्धेनेत्यर्थः । संसर्गविशेषेति । उक्तं वाक्यं संयोगेन द्रव्ये घटान्वयबोधेच्छया प्रयुक्तमित्याद्याकारकज्ञानेत्यर्थकं, तथा च यदा यत्र यादृशसम्बन्धघटिततात्पर्य्यज्ञानं तद्घटितसामग्रीविशेषबलात् तदा तादृशसम्बन्धस्यैव भानमिति नानियम इति भावः ।

शक्तिज्ञानजन्यसंसर्गविशेषोपस्थितिरेव नियामिका कुतोऽनियमः ? इत्यत आह—सामान्यरूपेणेति । सम्बन्धत्वादिसामान्यधर्म्मेणेत्यर्थः । शक्यकोटौ=अन्वितघटादिघटके । उक्तस्यैवेति । तात्पर्य्यज्ञानस्यैवेत्यर्थः। संसर्गविशेषेति । इदं वाक्यम् एतद्धर्म्मावच्छिन्नविशेष्यताकैतत्सम्बन्धावच्छिन्नैतद्धर्म्मावच्छिन्नप्रकारताकबोधजनकत्वप्रकारकेच्छावदित्याद्याकारकपर्य्यवसन्ने तात्पर्य्यज्ञाने, अवच्छिन्नत्वांशे संयोगादेः प्रकारतया

उद्‌बोधकान्तरोपस्थितेऽपि संसर्गे तात्पर्य्यग्रहसम्भवात् तत्र वृत्तिग्रहस्यानपेक्षितत्वात्, तस्माद्‌ घटत्वगोत्वादिविशिष्टे घटगवादिपदस्य शक्तिः; पदार्थद्वयसंसर्गस्त्वाकाङ्क्षादिबललभ्य एवेति स्थितम्,

घटादिपदस्य पदार्थताऽवच्छेदकीभूतघटत्वादिविशिष्ट एव शक्तिर्न तु तदुपलक्षिते; घटत्वादेरुपलक्षणत्वे तस्य द्रव्यत्वाद्यविशेषेण घटादिपदाद्‌ द्रव्यत्वादिना न बोधः; अपि तु घटत्वादिनैवेति नियमानुपपत्तेः,

अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्ट्यस्य घटादौ सत्त्वाद्‌ घटादिपदशक्तेर्घटत्वादिसामानाधिकरण्यरूपवैशिष्ट्यवद्‌ द्रव्यत्वादिसामानाधिकरण्यस्यापि तत्र सत्त्वाद्‌ घटादिविशिष्टे शक्तिर्न तु द्रव्यत्वादिविशिष्ट इत्यस्य कोऽर्थः ?

अत्र वदन्ति—तद्विशिष्टे शक्तिरित्यस्य तद्धर्म्मतद्वैशिष्ट्यतदाश्रयेषु त्रिष्वेव शक्तिरित्यर्थः, घटादिपदशक्तिमति द्रव्यत्वादिवैशिष्ट्यसत्त्वेऽपि

---

भानात् तादृशप्रकारताप्रयोजकतदुपस्थित्यभावेन तात्पर्य्यज्ञानासम्भव इति भावः ।

संस्कारोद्बोधार्थमेव=संस्कारे फलोपधानार्थमेव । तत्र=सम्बन्धे । उद्‌बोधकान्तरेति । सम्बन्धान्तरज्ञानादिजन्योपस्थितिविषय इत्यर्थकम् । तस्मादिति । संसर्गांशे शक्त्यनावश्यकत्वादित्यर्थः । घटत्वेति । अस्य सावधारणपरत्वेन; न त्वन्विघटत्वादिविशिष्ट इति भावः । आकाङ्क्षादीति । आदिना योग्यतातात्पर्य्यज्ञानयोः परिग्रहः, तस्य=घटत्वादेः, द्रव्यत्वाद्यविशेषाद्=द्रव्यत्वादिना सह वैलक्षण्याभावादिति । आशङ्कते—अथेति । द्रव्यत्वसामानाधिकरण्यस्येति, तथा च घटादिपदस्य घटत्वादिविशिष्टे शक्तिरिति वाक्यजन्यप्रतीतौ सप्तम्या वृत्तित्वार्थकतया घटत्वादिशक्त्योः सामानाधिकरण्यावगाहनेनापि न निस्तारः । अत्रेति । तादृशशङ्कायामित्यर्थः,

वदन्तीति । स्वयन्तु जातावयवसंस्थानरूपाकृतौ व्यक्तौ च गवादिपदानां शक्तिस्वीकारादेतस्मिन्ननिर्भरसूचनाय तदुक्तम्, एतच्चाग्रे व्यक्तीभविष्यति, तद्वैशिष्ट्येति । तद्धर्म्मवैशिष्ट्येत्यर्थः, वैशिष्ट्यञ्च

द्रव्यत्वादौ तच्छक्तिविरहात् तेषामुपलक्षणता; घटत्वादौ तत्सत्वाच्च तेषां विशेषणता, एवञ्च प्रवृत्तिनिमित्तेऽपि शक्तेः सत्त्वात् तस्यापि वाच्यतया; वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वमिति प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणदानं "जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रोक्तं गोत्वादिजातेर्गवादिपदार्थत्वं चोपपद्यते,

अथ घटशब्दाद्घटो बोद्धव्य इत्याकारिकाया भगवदिच्छाया-

---

सम्बन्धः, स च समवायादिः, उपलक्षणतेति। सामानाधिकरण्यमात्रमित्यर्थः ।

वाच्यत्वे सतीत्यादि, आकाशादिशब्दस्य शब्दाश्रये स्वरूपतः शक्तिवादिप्राचां नये शब्दाश्रयत्वे प्रवृत्तिनिमित्तत्ववारणाय—वाच्यत्वे सतीति ।

नव्यनये तु द्रव्यादिपदादपि घटत्वाद्युपलक्षितघटादौ शक्तिग्रहाद् घटत्वादिना घटाद्युपस्थितिर्जायतेऽतो द्रव्यादिपदानां घटत्वादौ प्रवृत्तिनिमित्तत्ववारणाय-तद्,

नन्वेवं घटादिपदाविशेषेणाकाशादिपदस्यापि विशिष्टवाचकत्वं; न तु निरवच्छिन्नशक्तिकत्वम्, एवञ्च प्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणमनुपादेयमेवेति दीधितिकारस्य तद्विशेषणखण्डनमसङ्गतम्; उक्तरीत्या द्रव्यादिपदानां घटत्वादौ प्रवृत्तिनिमित्तत्ववारकतया नव्यमतेऽपि तत्सार्थक्यसम्भवादिति चेद् ?

न—सामान्यतः शक्तिविषयत्वविशेषणेनोपपत्तौ वाच्यत्वपर्य्यन्तप्रवेशो व्यर्थ इत्यत्र तात्पर्य्याद् ,

न च तादृशज्ञानेन घटत्वाद्यंशे सम्बन्धानवगाहनाद् घटत्वादिना तत्स्मरणं दुर्घटमिति वाच्यम् ?

स्मृतिजनने प्रकारांशे सम्बन्धभानानपेक्षणाद्, अन्यथा लक्ष्यताऽवच्छेदकतीरत्वादिना तीरादेः स्मृत्यनुपपत्तेः;

गवादिपदानां जात्याकृतिविशिष्टवाचकतामते तेषां संस्थाने प्रवृत्तिनिमित्तत्ववारणाय—वाच्यवृत्तित्वे सतीति ।

न चावयवविशेषसंयोगरूपस्य संस्थानस्य स्वसमवायिसमवेतत्वसम्बन्धेन गवादौ वृत्तित्वात्तन्निवेशेऽप्यतिव्याप्तितादवस्थ्यमिति वाच्यम् ?

बोधविशेषविषयतात्वेन बोधविषयप्रकारतानिरूपितविशेष्यता घट एव न तु घटत्वादौ विषयतामात्रञ्च वस्तुमात्र एवेति कथं घटपदशक्तिर्घटत्वादिषु त्रिष्वेवेति नियम इति चेद् ?

ईश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकसम्बन्ध एव

---

साक्षात्सम्बन्धेन तद्विवक्षणाद्, एतच्चाग्रे स्वयमेव वक्ष्यते,

वृत्तित्वञ्चात्र वाच्यताघटकसम्बन्धेन विवक्षणीयं; नातः संस्थानस्य कालिकादिसम्बन्धेन गवादौ सत्त्वेऽपि तत्रातिव्याप्तितादवस्थ्यम्, वृत्तित्वपदेन सम्बद्धत्वस्य विवक्षणीयतया गम्यादिधातूनां प्रवृत्तिनिमित्तसंयोगादेरनुकूलत्वादिसम्बन्धेन वृत्तित्वविरहेऽपि न क्षतिः, पशुपदस्य त्वेतन्मते लोमवल्लाङ्गूलविशिष्ट एव शक्तिः; न तु स्वाश्रयलाङ्गूलसमवेतत्वसम्बन्धेन लोमवति नातस्तत्राव्याप्तिः, यत्र बुद्धिस्थतादृशपरस्परासम्बन्धेन लोमविशिष्टस्तच्छब्देन परामृश्यते तत्र तच्छब्दस्य लक्षणैव न तु शक्तिरतो न तत्राव्याप्तिः,

तच्छब्दस्य लक्षणा नास्ति सर्व्वत्रैव शक्तिरिति तु नाशङ्कनीयम्; अवयवग्रन्थे जगदीशतर्कालङ्कारेण तच्छब्दस्यापि लक्षणास्वीकाराद्,

द्रव्यदधिपदादेर्घटदध्यादौ प्रवृत्तिनिमित्तत्वापत्तिः; घटादिरूपद्रव्येऽवयविरूपदध्यादौ च वाच्यत्वस्य सत्त्वात् तद्वाच्यात्मककपालादाववयवे दध्नि च वृतेश्चातो—वाच्योपस्थितीति । तदर्थस्तु भ्रमान्यशक्तिज्ञानजन्या योपस्थितिस्तन्मुख्यविशेष्यताकप्रकारताऽऽश्रयत्वम्, द्रव्यपदं द्रव्यवति शक्तमिति शक्तिभ्रमजन्योपस्थितिमादाय द्रव्यपदादेर्घटादावतिव्याप्तितादवस्थ्याद् भ्रमान्येति, द्रव्यपदं द्रव्यवति लाक्षणिकमिति ज्ञानजन्योपस्थितिमादायोक्तातिव्याप्तिवारणाय-शक्तीति, मुख्यविशेष्यतानिवेशात् पशुपदादीनां शक्यताऽवच्छेदकताऽवच्छेदके लोमादौ नातिव्याप्तिरिति ।

विषयतामात्रञ्चेति । अस्येश्वरेच्छीयविषयतात्वावच्छिन्नं तत्पदजन्यबोधविषयत्वप्रकारकेश्वरेच्छीयविषयतात्वावच्छिन्नं वेत्यर्थः ।

वस्तुमात्र एवेतीति । तथा च घटत्वादौ वाच्यत्वोपपत्तावपि सर्व्वेषु पदार्थेषु सर्व्वेषां पदानां वाच्यत्वापत्तिरिति भावः ।

ईश्वरेच्छाया इति । अत्र षष्ठ्यर्थो निरूपितत्वं तस्य च विषयताऽऽत्मकसम्बन्धेऽन्वयः, भगवदिच्छा तु तत्तत्पदजन्यबोधीययादृशविषयत्वेन यमवगाहते तत्र शाब्दबोधीयतादृशविषयतां प्रयुङ्क्ते इति नियमम-

तत्र तत्पदशक्तिव्यपदेशनियामकः, घटपदाद् घटो बोध्य इत्येतादृशेच्छायाञ्च घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां समवायावच्छिन्नबोधविषयत्वावच्छेदकत्वं घटत्वे समवायेन घटत्वावच्छेद्यत्वं वा विषयतायां संसर्गमर्य्यादया भासते,

एवञ्चाश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घटस्यावच्छेदकत्वसंसर्गावच्छिन्नघटविशेषणताऽऽपन्नबोधविषयत्वस्य या प्रकारता तन्निरूपितविशेष्यत्वं घटविशेषणताऽऽपन्नबोधविषयत्वांशेऽवच्छेद्यत्वसम्बन्धेन प्रकारत्वं वा घटत्वस्य घटत्वे बो-

---

ङ्गीकृत्याह–घटपदादिति । इत्येतादृशेच्छायामित्यत्र सप्तम्यर्थो निरूपितत्वं तस्य च भासत इत्यत्र भासधात्वर्थविषयतायामन्वयः, घटत्व इत्यत्र सप्तम्यर्थो विशेष्यत्वम् अस्यापि निरूपितत्वसम्बन्धेन भासधात्वर्थेऽन्वयः, भासत इत्यत्राख्यातार्थ आश्रयत्वरूपं कर्त्तृत्वं तस्य चावच्छेदकत्वमित्यत्रान्वयः। संसर्गमर्य्यादयेति। सांसर्गिकविषयतयेत्यर्थः, अभेदोऽत्र तृतीयाऽर्थः तस्यापि भासत इत्यत्र भासधात्वर्थेऽन्वयः, तथा च ईश्वरेच्छानिरूपितघटत्वनिष्ठविशेष्यतानिरूपितसांसर्गिकविषयत्वाभेदवद्विषयत्वाश्रयो बोधविषयताऽवच्छेदकत्वमित्यन्वयबोधः, बोधविषयतापर्य्यन्तं परिचायकं बोध्यम् ,

द्वितीयपक्षे बोधविषयतायामित्यत्र सप्तम्यर्थो विशेष्यत्वं तथा च ईश्वरेच्छीयबोधविषयतानिष्ठविशेष्यतानिरूपितसांसर्गिकविषयत्वाभेदवद्विषयत्वाश्रयो घटत्वावच्छेद्यत्वमित्यन्वयबोधः ।

अत्र प्रथमकल्पे तादृशबोधविषयत्वं घटे भासमानं सद्विशेष्यपारतन्त्र्येणावच्छेदकतासम्बन्धेन घटत्वे भासते,

द्वितीयकल्पे घटत्वं स्वधर्म्मिताऽवच्छेदकके तादृशेच्छायां भासमाने तादृशविषयत्वे समवायसम्बन्धावच्छिन्नावच्छेद्यतासम्बन्धेन तथा भासत इति बोध्यम् ।

घटविशेषणताऽऽपन्नबोधविषयतेत्यनेन परतन्त्रा तादृशबोधविषयत्वनिष्ठप्रकारताकविशेष्यता न तु स्वतन्त्रेति सूचितं, तथा चाश्रयत्वसम्बन्धावच्छिन्नस्वतन्त्रबोधविषयत्वनिष्ठप्रकारत्वावच्छिन्ना याऽवच्छेदकत्वसम्बन्धावच्छिन्नेच्छीयप्रकारता तन्निरूपितविशेष्यता घटत्वादिविशेषणस्य शक्तिः,

एवाञ्चावच्छेद्यावच्छेदकभावापन्नप्रकारतानिरूपितविषयतात्रयमेव

धविषयतायाः संसर्गविधया भासमानेऽवच्छेदकत्वेऽवच्छेदकत-या भासमानत्वं समवायस्येति त्रितयमेव घटपदजन्यबोधविषयतायां-ज्ञातमुपयुज्यत इति त्रयाणां वाच्यतोपपत्तिः,

---

पृथग् विशेष्यविशेषणतत्संसर्गाणां शक्तिर्न तु विशेष्यभेदादिव विशृ-ङ्खलभातामिति, अवच्छेदकत्व इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्य च निरूपितत्वसम्बन्धेन भासमानत्वमित्यत्र भासधात्वर्थविषयतायामन्व-यः । अवच्छेदकतयेति । अवच्छेदकत्वसंसर्गेण तृतीयार्थोऽवच्छिन्नत्वं-तस्यापि भासधात्वर्थेऽन्वयः । ज्ञातमुपयुज्यत इति ।

अथात्र किमाकारकं ज्ञानं उपयोगि ?

अत्र नव्याः–तत्तत्पदजन्यबोधीयविषयतात्वावच्छिन्नेच्छीयप्रकार-ताकविशेष्यतानिष्ठप्रकारतानिरूपितघटादिनिष्ठमुख्यविशेष्यताकं ता-दृशविषयतात्वावच्छिन्नेच्छीयप्रकारत्वावच्छिन्नावच्छेदकत्वसम्बन्धा-वच्छिन्नप्रकारतानिरूपितविशेष्यताप्रकारकं घटत्वादिमुख्यविशेष्यकम् इच्छीयतादृशप्रकारत्वावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वनिष्ठसंस-र्गतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठाव-च्छेदकत्वनिरूपिताधेयत्वसम्बन्धावच्छिन्नावच्छेदकताप्रकारकं समवा-यादिविशेष्यकञ्च ज्ञानं समवायेन घटत्वादिप्रकारकघटादिविशेष्यका-न्वयबुद्धौ हेतुरिति प्राहुः।

यत्तु—घटत्वादिनिष्ठविशेष्यताकसमवायसम्बन्धावच्छिन्नावच्छेद-कत्वनिष्ठसांसर्गिकविषयताकप्रकारत्वावच्छेदिका या तादृशविषय-तात्वावच्छिन्नेच्छीयप्रकारता तन्निरूपितविशेष्यतावान् घट इत्याकार-कमेकं विशिष्टवैशिष्ट्यावगाहिज्ञानं हेतुरिति;

तत्तुच्छम्–एतद्ग्रन्थस्य तादृशज्ञानपरत्वे; "अथ घटत्वे"त्याद्यग्रिम-ग्रन्थेन घटत्वविशेष्यकज्ञानस्य कारणत्वे घटत्वत्वानुपस्थितिकाले ता-दृशशाब्दबोधानुपपत्तिशङ्कनस्यासङ्गत्यापत्तेः; तत्र घटत्वादेर्विशेषण-तया प्रवेशादिति।

परे तु–तत्तत्पदजन्यबोधविषयतात्वावच्छिन्नेच्छीयप्रकारतानिष्ठै-कप्रकारतानिरूपितं घटत्वादिनिष्ठविशेष्यतात्रयं तन्निरूपकं ज्ञानमेव हेतुः, सम्भवति च तादृशज्ञानं यथा घटपटमठा इत्यादौ घटत्वाद्यव-च्छिन्नविशेष्यतात्रयनिरूपितत्रित्वादिनिष्ठैकप्रकारतानिरूपकं ज्ञानं, त-द्वदिहापि, अत्र घटेत्यादौ व्यासज्यवृत्तिधर्मनिष्ठैकसम्बन्धावच्छिन्ने-

घटघटत्वसंसर्गेषु सङ्केतविषयतानां मिथो वैलक्षण्येऽपि तन्नि-रूपकबोधनिष्ठाविषयताया ऐक्याच्छक्त्यैक्यप्रवादो; न तु सङ्केतैक्यात्, शक्तशक्यत्वावच्छेदकभेदेनापि शक्तिभेदानुपपत्तेः भगवत्सङ्केतस्याभेदात्, तदंश आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसङ्केतविषयताऽवगाहिज्ञानस्यैव पदार्थान्तरान्वयबोधोपयोगित्वमिति शक्तिभ्रमं विना न पदार्थताऽवच्छेदके पदार्थान्तरान्वयः,

---

कप्रकारता; प्रकृते त्वव्यासज्यवृत्तिधर्मनिष्ठा विभिन्नसम्बन्धावच्छिन्ना, तादृशसम्बन्धाश्च-स्वनिरूपितविशेष्यत्वस्वावच्छिन्नप्रकारताकविशेष्यत्वस्वावच्छिन्नप्रकारताऽवच्छेदकतानिरूपितावच्छेदकत्वस्वरूपाद्यान् विशेष इति ध्येयमिति वदन्ति ।

नन्वेतावता सङ्केतविषयतानामेव शक्तित्वमायातं, सा च पदार्थतदवच्छेदकादिभेदेन विभिन्नेति कुतस्त्रिष्वेका शक्तिरिति प्रवादोपपत्तिरित्याशङ्कायां? समाधत्ते–घटघटत्वेत्यादि । तन्निरूपकेति । सङ्केतनिरूपकेत्यर्थः । बोधविषयतायाः=बोधनिष्ठविषयतायाः,

शक्त्यैक्यप्रवाद इति । उपपद्यत इति शेषः, तथा चैका=एकनिरूपिका, साक्षात्परम्परासाधारणनिरूपितत्वसम्बन्धेनैकत्वविशिष्टा वेत्यर्थः ।

हर्य्यादिनानाऽर्थकशब्दानां शक्यताऽवच्छेदकैक्येऽपि विष्णुत्वसिंहत्वादिशक्यताऽवच्छेदकभेदेन शक्तिभेद इत्यत उक्तं-शक्यत्वेति ।

ननु घटत्वादावपि शक्तिस्वीकारे तेषां पदार्थत्वेनेतरपदार्थान्वये घटो नित्य इत्यादितोऽप्यभ्रान्तानामन्वयबोधः स्यादित्यत आह–तदंश इत्यादि । ज्ञानस्यैवेति । एवकारेणावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वानिष्ठप्रकारतानिरूपितसङ्केतविषयत्वावगाहिज्ञानादेर्व्यवच्छेदः, पदार्थान्तरान्वयबोधोपयोगित्वं भिन्नवृत्त्युपस्थापितार्थान्वयबोधोपयोगित्वं, तेन गच्छतीत्यादौ तिङुपस्थाप्यवर्त्तमानत्वादेर्न तदुपस्थाप्यताऽवच्छेदककृतित्वादावन्वयः, शक्तिभ्रमं विना=भ्रमात्मकतादृशज्ञानं विना, न पदार्थताऽवच्छेदक इति । एतच्च प्रायिकाभिप्रायेण, तेन पक्तेत्यादौ तृजाद्युपस्थाप्यताऽवच्छेदककृत्यादौ पाकादेरन्वयेऽपि न क्षतिः,

अथ कुत्र स्थले पदार्थताऽवच्छेदके पदार्थान्तरान्वयापत्तिः? यद्वारणाय तादृशकार्य्यकारणभावकल्पनम्,

न च यत्र घटत्वे नित्यस्य लोम्नि पशुभेदस्याबाधितस्य योग्यताज्ञानं तात्पर्य्यज्ञानं तदवच्छिन्ने शक्तिग्रहाद् घटत्वावच्छिन्नस्य लोमा-

वच्छिन्नस्य वोपस्थितिश्च वर्त्तते तत्र घटो नित्यः पशुर्न पशुरित्यादिवाक्याद् घटत्वेऽभेदेन नित्यस्य लोम्नि च पशुभेदस्यान्वयबोधः स्यादिति वाच्यम् ?

तादृशबोधं प्रति घटत्वं नित्यं लोम न पशुरित्याद्याकाङ्क्षाज्ञानस्यैव कारणतया तद्विरहादेव तादृशापत्तेरसम्भवाद्,

ननु यत्र घटपदस्य घटत्वे पशुपदस्य वा लोम्नि शक्तिभ्रमो लक्षणाग्रहो वाऽस्ति; तत्रेतरकारणसहकृतात् तादृशवाक्याद् घटत्वे नित्यस्य लोम्नि वा पशुभेदस्यान्वयबोधजननेन तादृशबोधं प्रत्यप्याकाङ्क्षाज्ञानात्मकस्य तादृशवाक्यज्ञानस्य कारणताया वक्तव्यत्वेनोक्तस्थले तादृशापत्तिर्भवत्येवेति चेद् ?

न–तत्र तादृशशक्तिभ्रमादिजन्याया लक्षणाग्रहजन्याया वा घटत्वादेरुपस्थितेरसत्त्वेन तादृशापत्तेरयोगाद्,

यादृशयादृशकारणसत्त्वे कुत्र चित् कार्य्यमुत्पद्यते तादृशकारणस्तोमस्यैव कार्य्यापादकत्वनियमादिति चेद् ?

मैवम्––यस्मादेतद्ग्रन्थस्यायम्भावः––उपस्थितेर्हेतुतायां मुख्यविशेष्यत्वादिरूपविषयताविशेषस्याप्रवेशेन तद्धर्म्मप्रकारेण तद्विषयकशाब्दं प्रति शक्तिग्रहजन्यतद्धर्म्मप्रकारेण तद्विषयकोपस्थितित्वेनैव हेतुत्वं यदि वाच्यं; तथा च घटादिपदानां घटत्वादौ शक्तिभ्रमाद्यधीनघटत्वाद्युपस्थितेरपि घटत्वादिविषयकान्वयबोधं प्रति शक्तिज्ञानजन्यघटत्वादिविषयकोपस्थितित्वेनैव हेतुतया घटत्वविशिष्टे शक्तिग्रहाद्यधीनघटादिविषयकोपस्थितेर्घटत्वादिविषयकतया तादृशकारणतावत्त्वेन शक्तिग्रहाद्यधीनघटत्वादिप्रकारकघटाद्युपस्थितिकाल इतरकारणसत्त्वे तादृशापत्तिर्दुर्वारैव, कारणताऽवच्छेदका यावन्तो धर्म्माः प्रत्येकं तद्धर्म्मावच्छिन्नयत्किञ्चिद्व्यक्तीनां सत्त्वस्यैव कार्य्योत्पादकत्वनियमेन तदापादकत्वाद्,

अथ स्वानधिकरणादिषु तत्तच्छाब्दबोधव्यक्त्यापत्तिवारणाय तत्तच्छाब्दव्यक्तिं प्रति शक्तिज्ञानजन्यतत्तदुपस्थितिव्यक्तित्वेन हेतुताया आवश्यकत्वेन शक्तिभ्रमाद्यधीनतदुपस्थितिव्यक्तेस्तदानीमसत्त्वेन न तदापत्तिरिति चेद् ?

यदि तत्तद्व्यक्तित्वस्य कार्य्यताऽवच्छेदकत्वं कल्प्येत तदा तद्व्यक्तित्वावच्छिन्नं प्रति कारणमेव तद्व्यक्तित्वावच्छिन्नमापादयति तदेव न प्रयोजनविरहाद्,

अथ वा भवतु तद्व्यक्तित्वं कार्य्यताऽवच्छेदकं मा वा; तथाऽपि

तत्र घटत्वादिधर्म्मिकघटादिभेदप्रकारकाद्यन्वयबुद्धित्वरूपसामान्य-धर्म्मावच्छिन्नस्यापत्तेर्दुर्वारत्वात् सामग्रीसत्त्वात् तत्र तद्व्यक्तिकारणानपेक्षणाद् अन्यथाऽन्वयव्यतिरेकदर्शनादिना सामान्यधर्म्मावच्छिन्नं प्रति सामान्यधर्म्मावच्छिन्नस्य कारणताग्रहो न स्याद् यस्मात् यस्य व्यतिरेके दृष्टचरेभ्य इतरकारणेभ्यः कार्य्योत्पत्तिर्नावलोक्यते जायते चेतद्यद्येतत् कार्य्यं प्रति कारणं न स्याद् एतत् कार्य्यमवश्यमुत्पद्येतेत्यापत्तिस्तदा तत् कार्य्यं प्रति तस्य कारणत्वं परिच्छिद्यते, यस्य व्यतिरेके तादृशापरसकलेत्यादितर्कदीधितेरपि तत्रैव तात्पर्य्यं-बोध्यं, तत्र यदीतरकारणमध्ये तद्व्यक्तिरूपकारणमप्यपेक्ष्यते तदा यद्वह्निव्यक्तिसत्त्व महानसादौ धूमोत्पत्तिरवलोकिता; अन्यत्र तद्वह्निव्यक्तेरसत्त्वेन तदापत्तेरसम्भवः स्यादत एवानुमितिनाशकालेऽनुमित्युत्पादो दुर्व्वार एवेति दीधितिरपि सङ्गच्छते,

वस्तुतस्तु यत्र यत्र स्थले यद्यच्छरीरावच्छेदेन पदार्थताऽवच्छेदक-धर्म्मिकशक्तिभ्रमादिजन्यपदार्थताऽवच्छेदकोपस्थितिघटितसामग्र्येक-दैव समवहिता न तु तत्पूर्व्वं तत्परतो वा; तत्तच्छरीरावच्छेदेनात्मनि पदार्थताऽवच्छेदकान्वयबोध एकैक एव, तत्तच्छाब्दबोधव्यक्तिं प्रति तु तत्तच्छरीरव्यक्तेरेव कारणत्वं कल्प्यते नान्यस्य तत्र तत्र तद्धर्म-विशिष्टधर्म्मिकशक्तिग्रहाद्यधीनोपस्थितिघटिततादृशसामग्रीतः पदार्थ-ताऽवच्छेदक इतरपदार्थान्वयबोधापत्तिर्दत्तेति,

यत्तु—तादृशपारमार्थिककारणकूटाभावादेव न तादृबोधापत्तिरित्ये-तद्ग्रन्थस्य तात्पर्य्यं न त्वतिरिक्तकार्य्यकारणभावकल्पनया तादृशाप-त्तिवारणे तात्पर्य्यम्;

तदसद्—उक्तापत्तेरवारणाद्, गतिसम्भवे ग्रन्थस्य यथाश्रुतार्थप-रित्यागानर्हत्वाच्चेति,

अथ कीदृशकार्य्यकारणभावः कल्पनीयो येन न तदापद्येतेति ?

अत्र नव्याः-किञ्चित्प्रकारतानिरूपिता योपस्थित्यप्रयोज्या सांसर्गि-कविषयता तन्निरूपिततत्पदार्थनिष्ठविशेष्यताशालिशाब्दत्वावच्छिन्नं प्रति किञ्चित्पदजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेच्छीयविशेष्यत्वनिष्ठप्रकारताकतत्पदार्थनिष्ठविशेष्यताशालिज्ञानत्वेन तादृशविशेष्यतासम्बन्धेन शाब्दं प्रति तादृशविशेष्यतासम्बन्धेनोपस्थितित्वेन वा हेतुता वाच्या, अत एव पशुर्धावतीत्यादौ लोमानिष्ठविशेष्यताया उपस्थितिप्रयोज्यसांसर्गिकविषयतानिरूपितत्वेन न क्षतिरित्याहुः ।

यत्तु-तदंशे सङ्केतमुख्यविशेष्यताग्रहस्तत्रेतरान्वयबोधप्रयोजको-लोमादिमान् पशुपदाद्बोद्धव्य इत्याकारकसङ्केते लोमाद्यंशे बोधाविषयतायाः प्रकारत्वेऽपि लोमादेर्धर्म्मिविशेषणताऽऽपन्नस्यैव तादृशाविषयताविशेष्यत्वं; न तु मुख्यविशेष्यत्वमतो न लोमादौ पदार्थान्तरान्वय इति,

तन्न-लोम पशुपदजन्यबोधविषयताऽवच्छेदकं भवात्वित्याद्याधुनिकसङ्केतविषयकादवच्छेदकतासंसर्गावच्छिन्नतादृशबोधाविषयत्वप्रकारताकमुख्यविशेष्यं लोमेति ज्ञानाल्लोमादिमुख्यविशेष्यकशाब्दबोधानुदयेनाश्रयत्वसम्बन्धावच्छिन्नत्वेन तादृशबोधाविषयत्वप्रकारताऽवगाहिताया अवश्यं निवेशनीयत्वात् , तत्र च लोमावच्छिन्नविषयकबोधस्यैव सङ्केतविषयतया ग्रहेणान्यादृशबोधोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगात् तादृशविशेष्यतायां मुख्यत्वनिवेशे प्रयोजनाभावाद्,

एवञ्च पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेत्यत्र पदार्थत्वंबोधविषयताऽऽश्रयत्वेन सङ्केताविषयत्वं, तदेकदेशत्वञ्च बोध-

---

यत्त्विति। विशेष्यताया मुख्यत्वं प्रकारत्वानवच्छिन्नत्वं, प्रकारत्वेऽपीति। अवच्छेदकतासम्बन्धेनेति शेषः,

न तु मुख्यविशेष्यत्वमिति। पारतन्त्रीयतादृशाविशेष्यतायाः स्वातन्त्रीयतादृशप्रकारत्वावच्छिन्नत्वादिति भावः।

ईश्वरसङ्केतस्य तादृशत्वे मानाभावादाह—आधुनिकेति। सङ्केतेति। लोम; अवच्छेदकतासम्बन्धेन पशुपदजन्यबोधीयविषयतावद्भवत्वित्याकारकेत्यर्थः। तत्रेति। तादृशसङ्केतग्रहोत्तादृशबोध इत्यर्थः। सप्तम्यर्थो विषयत्वं तस्य चेष्टापत्तावन्वयः, एवञ्च=सङ्केतीयमुख्यविशेषत्वस्येतरपदार्थान्वयाप्रयोजकत्वे च,

ननु स्वमते लोम पशुपदजन्यबोधविषयत्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसङ्केतीयमुख्यविशेष्यताकामिति ज्ञानाल्लोमांश इतरपदार्थान्वयवारणेऽपि लोमविशिष्टांश इतरपदार्थन्वयानुपपत्तिः, तदंश आश्रयत्वसम्बन्धावच्छिन्नप्रकारताकविशेष्यत्वस्याभानादिति चेद् ?

न-यतो लोमवतः पशुपदजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धा-

विषयताऽवच्छेदत्वेन तथात्वरूपं, तदेव च शक्यताऽवच्छेदकत्व-मित्यवधेयम् ।

अथ घटत्वाद्युपलक्षिते द्रव्यपदशक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य घटादिपदशक्तिप्रमातः कालिकादिसम्बन्धेन घटत्वादि-प्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्बन्धेन तद्धर्मप्रकारकशा-ब्दबोधं प्रति तत्सम्बन्धेन तद्धर्म्मविशिष्टांशे तत्पदवाच्यत्वावगाहि ज्ञानं कारणं वाच्यम् ,

विशिष्टांशे तत्पदवाच्यत्वावगाहित्वञ्च विशेषणीभूततद्धर्म्मत-त्सम्बन्धतद्धर्म्यंशे तदवगाहित्वरूपं वाच्यं; न तु तेन सम्बन्धेन तद्धर्म्मं धर्म्मिताऽवच्छेदकीकृत्य तदवगाहित्वमात्रम् ,

घटत्वादिकं धर्म्मिताऽवच्छेदकीकृत्य द्रव्यादिपदशक्तिज्ञानस्यापि कालिकादिसम्बन्धेन घटत्वादिकं धर्म्मिताऽवच्छेदकीकृत्य घटादौ घटादिपदशक्तिग्रहस्यापि च प्रमात्वेनोक्तातिप्रसङ्गावारणाद्, एवमपि

---

वच्छिन्नप्रकारतानिरूपितविशेष्यत्वप्रकारकज्ञानस्य तज्जन्योपस्थितेश्च सत्त्व उक्तज्ञानसत्त्वेऽपि लोमवतीरपदार्थान्वये बाधकाभावात् ता-दृशबोधो भवत्येव, तादृशज्ञानजन्यलोमवदनुपस्थितौ तु तत्कारण-विरहादेव न तदुत्पत्तिः,

यत्त्वितिमतेऽपि तादृशोपस्थितिकाल एव दोषं दत्तवानिति न कोऽपि दोषः,

एतेन वायसदशनानुसन्धानवत् केषाञ्चित् तदुपपादनान्तरप्रया-सो विफल एवेति ध्येयम् ,

ननु तथाऽपि पशुपदं पशुं बोधयत्वित्यादिवाचकत्वज्ञानात् पश्वा-दावितरपदार्थान्वयो न स्यात् तदंश आश्रयत्वसम्बन्धावच्छिन्नप्रका-रताकविशेष्यत्वज्ञानविरहादिति चेद् ?

न-अस्माच्छब्दादयमर्थो बोद्धव्य इत्युत्तरकल्प एव भट्टाचार्य्य-स्य निर्भरत्वात् , शब्दमणौ मिश्रेण तथैव लिखितत्वाच्च,

विषयत्वसम्बन्धावच्छिन्नतादृशसङ्केतीयप्रकारताप्रकारकज्ञानस्या-पीतरान्वयबोधप्रयोजकत्वकल्पनाच्चेति ।

आशङ्कते-अथेति । घटत्वाद्युपलक्षिते=घटत्वाद्याश्रये, तदवगाहि-

घटत्वांशे निर्द्धर्म्मिताऽवच्छेदकत्वात् प्रमेयत्वादिधर्म्मिताऽवच्छेदककाच्च घटादिपदनिरूपितवाच्यताग्रहात्तत्प्रकारकबोधवारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वत्वावच्छिन्नधर्म्मिकवाच्यत्वग्रहापेक्षोपेया, तथा च घटत्वत्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिः,

न च तदंशे घटादिवाचकताज्ञानमेव शाब्दबोधहेतुः; एवञ्च स्वरूपतो घटत्वादिप्रकारकबोधे वाचकत्वांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति घटादिपदजन्यबोधे घटत्वत्वाद्युपस्थितेर्नापेक्षेति वाच्यम् ?

एवमपि घटादिपदांशे समवायवाचकताप्रकारकज्ञानस्य शाब्दबोधे घटत्वादिसम्बन्धतया स्वरूपतः समवायभानप्रयोजकताया—

---

स्वरूपमिति । वाच्यत्वाद्यवगाहित्वरूपमित्यर्थः । मात्रमिति । मात्रपदेन घटत्वाद्यंशे वाच्यत्वावगाहित्वव्यवच्छेदः । एवमपीति । घटत्वादित्रितये वाच्यत्वावगाहिज्ञानस्य हेतुत्वे चेत्यर्थः ।

निर्द्धर्म्मिताऽवच्छेदकेति । घटादिपदजन्यबोधविषयत्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारताकविशेष्यतावादित्याकारकादित्यर्थः,

तादृशविशेष्यत्वनिष्ठप्रकारताककिञ्चिदवच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुत्वे चाह—प्रमेयत्वादीति । प्रमेयं घटादिपदजन्यबोधविषयत्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारताकसङ्केतीयविशेष्यतावदित्याकारकादित्यर्थः ।

वाचकताज्ञानमेवेति । तत्सम्बन्धेन तद्धर्म्मप्रकारकशाब्दं प्रति तत्सम्बन्धावच्छिन्नतद्धर्म्मानिष्ठप्रकारताशालिशाब्दं जनयत्वित्याकारकसङ्केतीया या तद्धर्म्मानिष्ठाधेयत्वसम्बन्धावच्छिन्नप्रकारताकतत्सम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नविषयताकबोधनिष्ठविषयताकजनकत्वनिष्ठप्रकारताकविशेष्यता; तत्प्रकारकपदविशेष्यकज्ञानं हेतुः,

द्वितीयेच्छापक्षेऽपि तादृशेच्छीया या घटत्वनिष्ठविशेष्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्ना बोधविषयत्वनिष्ठा प्रकारत्वावच्छिन्ना प्रकारता तन्निरूपितबोधनिष्ठविषयतायाः परम्परया निरूपकत्वप्रकारकं पदविशेष्यकज्ञानं हेतुः,

तत्र प्रथम आधेयत्वसम्बन्धेन प्रकारत्वांश, द्वितीये तु विशेष्य-

वाच्यतया समवायवाचकताज्ञाने वाचकतांऽशे समवायादेः स्वरूपतः प्रकारत्वासम्भवेन समवायत्वादिप्रकारेणैव तज्ज्ञानस्योपगन्तव्यतया तदनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तेः,

तथा च केन रूपेण तत्र शक्तिधीहेतुता ?

अत्रोच्यते—तत्सम्बन्धेन तद्धर्म्मप्रकारकशाब्दबोधे तत्सम्बन्धावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकस्वजन्यबोधविषयत्वप्रकारतानिरूपितेच्छाविशेष्यतात्वावच्छिन्नसंसर्गकतत्सम्बन्धावच्छिन्नतद्धर्म्मानिष्ठधर्मिताऽवच्छेदकताकपदप्रकारकज्ञानत्वेन विषयताविशेषसंसर्गकार्थविशेष्यकशक्तिज्ञानस्य हेतुता,

ईदृशशक्तिग्रहे च सम्बन्धघटकतयैवावच्छिन्नत्वांशे समवा-

---

त्वांशे घटत्वादेः प्रकारतया भानात् स्वरूपतस्तत्सम्भवात्, जातेः स्वरूपतः समवायेनैव भानमिति त्वनुव्यवसायादौ व्यभिचारेण वक्तुमशक्यमिति भावः,

प्रकारत्वासम्भवेनेति । समवायस्य जात्यखण्डोपाध्यतिरिक्तत्वादिति हृदयम् । तदनुपस्थितिदशायां=समवायत्वानुपस्थितिदशायाम्, सिद्धान्तयति—अत्रोच्यत इत्यादि । स्वजन्येति । स्वपदं घटादिपदपरं,- हेतुतेति । तत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठप्रकारताकशाब्दबोधं प्रति तत्सम्बन्धावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकविषयतानिष्ठा या स्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नविषयतानिरूपितजन्यतानिष्ठविषयतानिरूपितबोधनिष्ठविषयतानिरूपितविषयतात्वावच्छिन्नप्रकारता तन्निरूपितसङ्केतीयविशेष्यतासम्बन्धेन घटादिपदप्रकारकतत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नार्थनिष्ठविशेष्यताशालिज्ञानत्वेन हेतुतेत्यर्थः । स्वपदं घटादिपदपरम्,

एवञ्च यथाश्रुतस्वजन्यबोधविषयतानिवेशे घटपटपदोभयजन्यघटपटोभयविषयकसमूहालम्बनज्ञानमादाय स्वजन्यबोधीयघटत्वावच्छिन्नविषयतानिष्ठेच्छीयप्रकारताकविशेष्यतासम्बन्धेन घटपदवान् पट इति ज्ञानं धृत्वा नातिप्रसङ्गः,

सम्बन्धघटकतयेति । तथा च संसर्गांशे विशेषणस्य विशेषणत्वाख्यविषयता स्वीक्रियते; न तु प्रकारत्वम्, उपस्थितेः प्रकारतां प्रति प्रयोजकत्वादिति भावः ।

यभानात्, स्वरूपतोऽपि तस्य तथाभानसम्भवेन समवायत्वोपस्थितेर्नापेक्षेति सामञ्जस्यम् ।

द्रव्यपदाद् द्रव्यं बोद्धव्यमित्याकारताप्रयोजकद्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारता न घटत्वावच्छिन्नविषयत्वनिष्ठा; अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठैवेति द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छाविशेष्यतात्वावच्छिन्नसंसर्गेण घटत्वावच्छिन्नविशेष्यकद्रव्यपदप्रकारज्ञानं संसर्गताऽवच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रमः,

न च द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारकद्रव्यत्वावच्छिन्नविशेष्यकबोधीया यैकत्वावच्छिन्नद्रव्यत्वावच्छिन्नविषयता साऽपि द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतात्वेन भगवदिच्छाविषयः, एवञ्च द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वप्रकारतानिरूपितभगवदिच्छाविशेष्यतासम्बन्धेनैकत्वादिमतो द्रव्यपदवत्त्वाद्

---

स्वरूपत इति । जात्यखण्डोपाध्यतिरिक्तपदार्थस्य प्रकारतयैव स्वरूपतो भानानङ्गीकारादिति हृदयम् ।

इत्याकारतेति । तादृशशब्दजन्यबोधीयविषयतैकरूपाविषयता, तादृशशब्दोच्चारणप्रयोजकबुबोधयिषीयाविलक्षणविषयता वेत्यर्थः, तथा च तादृशवाक्येन द्रव्यपदजन्यबोधीयद्रव्यत्वावाच्छिन्नाविषयतावद् द्रव्यमित्याकारिकेच्छैवाभिलप्यत इति भावः ।

भ्रम इति । तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठाविशेषणताकत्वरूपभ्रमत्वावच्छिन्न इत्यर्थः । न चेति ।

न च द्रव्यमेकत्ववदिति ज्ञानीयद्रव्यत्वावाच्छिन्नविशेष्यताया एकत्वप्रकारतानिरूपितत्वं न त्वेकत्वावाच्छिन्नत्व कुत एतत्सङ्गतिरिति वाच्यम् ?

विशेष्यतायाः प्रकारवाच्छिन्नत्वमभ्युपेत्य तथोक्तत्वात्, तच्च हेत्वाभासे स्वयमेव प्रत्यक्षमणौ चोक्तम् ।

केचित्तु—द्रव्यं गगनमित्यादिवाक्यजन्यगगनप्रकारतानिरूपितैकत्वद्रव्यत्वोभयधर्म्मावच्छिन्नविशेष्यताशालिज्ञानमादाय तदुक्तमित्याहुः।

द्रव्यं घट इत्यादिवाक्यत एकवचनेनैकत्वोपस्थितिकाल एकत्वेन

द्रव्यपदादभ्रान्तस्य पदान्तरानुपस्थितैकत्वप्रकारेणापि शाब्दबोधप्रसङ्गो दुर्व्वार एवेति वाच्यम् ?

तादृशविशेष्यतात्वेन तस्य सम्बन्धत्वानुपगमाद्,

अथ वा तत्पदजन्यतद्धर्म्मप्रकारकशाब्दबोधे तद्धर्म्मावच्छिन्नत्वावच्छिन्नत्वेन स्वजन्यबोधविषयत्वप्रकारताऽवगाहितादृशप्रकारतानिरूपितविशेष्यतासंसर्गकपदप्रकारकं ज्ञानं हेतुः,

एवञ्चैकत्वादिप्रकारकद्रव्यादिपदजन्यबोधजनकशक्तिग्रहेण द्रव्यादिपदजन्यबोधविषयत्वीयद्रव्यत्वाद्यवच्छिन्नत्वावच्छिन्नत्वविशिष्टभगवदिच्छाप्रकारतायां बाधितस्यैकत्वावच्छिन्नत्वावच्छिन्नत्वस्यावगाहनात् तस्य भ्रमत्वम्,

---

द्रव्यबोधस्येष्टत्वादाह—पदान्तरानुपस्थितैकत्वेति । प्रसङ्ग इति । द्रव्यगुणः शब्द इत्यादावित्यर्थः ।

तादृशविशेष्यतात्वेनेति । जन्यबोधीयैकत्वावच्छिन्नविषयताप्रकारतानिरूपितभगवदिच्छाविशेष्यतात्वेन । तस्येति । द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयताप्रकारतानिरूपितभगवदिच्छाविशेष्यत्वस्येत्यर्थः, द्रव्यपदत्वावच्छिन्नप्रतियोगित्वेनेति शेषः, तेनैकवचनामादिपदजन्यतादृशबोधमादाय तादृशविशेष्यत्वस्यैकत्वावच्छिन्नत्वघटिततादृशविशेष्यतात्वेनैकवचनादेः संसर्गत्वेऽपि द्रव्यादिपदस्य तत्प्रतियोगित्वाभावेन तस्य तत्संसर्गावगाहने ज्ञानस्य भ्रमत्वमलीकत्वंवेति भावः ।

तुष्यतु दुर्ज्जन इति न्यायेनाह—अथ वेति । तद्धर्म्मावच्छिन्नत्वावच्छिन्नेति । तथा च घटो घटपदजन्यबोधीयघटत्वावच्छिन्नविषयतावान् भवत्वित्याद्याकारक एव भगवत्सङ्केतो बोधविषयत्वांशे तत्तद्धर्म्मावच्छिन्नत्वावगाही शक्तिरिति; सा च द्रव्यपदजन्यबोधीयविषयतायामेकत्वाद्यवच्छिन्नत्वसत्त्वेऽपि न तद्रूपेण तामवगाहत इति,

एवञ्च तत्पदजन्यतद्धर्म्मप्रकारकशाब्दं प्रति तद्धर्म्मावच्छिन्नत्वावच्छिन्ना या स्वजन्यबोधीयविषयतात्वावच्छिन्नप्रकारता; तन्निरूपितेच्छीयविशेष्यतासम्बन्धेन तत्तत्पदप्रकारकार्थविशेष्यकज्ञानं हेतुरेवं सम्बन्धांशेऽपीति ।

यत्तु-पदार्थांशे घटत्वादेः शाब्दबोधप्रकारतायां तदंशे तत्तत्पदशक्यताऽवच्छेदकत्वमेव प्रयोजकं, शक्यताऽवच्छेदकत्वञ्च तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताऽवच्छेदकत्वं; न तु बोधविषयताऽवच्छेदकतया सङ्केतविषयत्वरूपं विशेषणविधया वाच्यत्वं, तथा च तद्धर्म्मप्रकारकशाब्दबोधे तद्धर्म्मावच्छिन्नत्वविशिष्टतादृशाविषयतासंसर्गकशक्तिज्ञानमेव कारणमास्ताम् ,

द्रव्यादिपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नभगवत्सङ्केतीयविशेष्यतात्वेनैव सम्बन्धता न तु तादृशप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यतात्वेन, तादृशप्रकारतानिरूपितभगवदिच्छाविशेष्यतायां द्रव्यत्वादेरेवावच्छेदकत्वं न तु घटत्वादेरित्येव वा स्वीकरणीयमिति नोक्तातिप्रसङ्गः, किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेन ? इति शक्यताऽवच्छेदकमवाच्यमेवेति दीधितिकारमतम् ,

तन्न शोभनम्-एवं सति शक्तिज्ञानाधुनिकसङ्केतज्ञानयोरेकरूपेणैव हेतुत्वाद्व यत्र द्रव्यपदाद्व गुणवत्त्वादिना द्रव्यं बोद्धव्यमित्या-

---

दीधितिकारमतं दूषयितमुपन्यस्यति—यत्त्विति ।

विशेष्यताऽवच्छेदकत्वमिति । ईश्वरेच्छीयविशेष्यताऽवच्छेदकत्वमित्यर्थः, बोधविषयताऽवच्छेदकतयेति । अत्र विषयतानिरूपितत्वंतृतीयाऽर्थः, तस्य च सङ्केतविषयत्वेऽन्वयः । तादृशेति । तत्पदजन्यबोधीयविषयत्वप्रकारतानिरूपिताविशेष्यतेत्यर्थः, तथा च तद्धर्म्मावच्छिन्नत्वतादृशविशेष्यतात्वोभयधर्म्मावच्छिन्नसंसर्गताकशक्तिज्ञानमेव हेतुरिति ।

एकरूपेणैव हेतुत्वादिति । लाघवात् कारणताऽवच्छेदक ईश्वरीयत्वस्याप्रवेशेन हेतुतानां तुल्यरूपतया अनुभवसिद्धत्वादित्यर्थः,

एतेन शक्त्याधुनिकसङ्केतयोरर्थपदवैलक्षण्येन भिन्नाकारकतयैकरूपेण हेतुत्वादित्यसङ्गतमित्यपि परास्तम् ,

एवञ्चाधुनिकस्थलेऽपि तद्धर्म्मप्रकारकशाब्दबोधे पदजन्यबोधविषयत्वनिष्ठप्रकारताकसङ्केतीयतद्धर्म्मावच्छिन्नविशेष्यतासम्बन्धेन पदप्रकारकज्ञानत्वेन हेतुत्वं वाच्यमिति भावः ।

गुणवत्त्वादिनेति । अत्र तृतीयाऽर्थोऽवच्छिन्नत्वं; तस्य च बोद्धव्यमि-

कारकाधुनिकसङ्केतीयद्रव्यत्वावच्छिन्नविषयता द्रव्ये गृहीता; तत्र तादृशसङ्केतग्रहाद् द्रव्यत्वेन द्रव्यबोधापत्तेर्गुणवत्त्वादिप्रकारकशाब्दबोधानुपपत्तेश्च दुर्वारत्वात् ।

इति सामान्यकाण्डः ।

---

त्यत्र तव्यप्रत्ययार्थताऽवच्छेदकविषयतायामन्वयः ।

तादृशसङ्केतस्येश्वरीयत्वे मानाभावादाह—आधुनिकेति । अनुपपत्तेरिति । गुणवत्त्वस्य सङ्केतीयधर्म्मिताऽनवच्छेदकत्वादिति भावः,

अथ भगवत्सङ्केताधुनिकसङ्केतयोरेकरूपहेतुत्वेऽपि द्रव्यपदाद् द्रव्यं बोद्धव्यमिति सङ्केतस्य द्रव्यपदजन्यबोधीयविषयतात्वपर्य्याप्तावच्छेदकताकप्रकारताकसङ्केतीयद्रव्यत्वावच्छिन्नविशेष्यतासम्बन्धेन द्रव्यपदप्रकारकद्रव्यत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुत्वे द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यमित्याकारकसङ्केतीयप्रकारताया गुणवत्त्वावच्छिन्नत्वतादृशविषयतात्वोभयधर्म्मावच्छिन्नत्वेन द्रव्यपदजन्यबोधीयविषयतात्वेतरधर्म्मानवच्छिन्नत्वाभावेन न तदापत्तिः,

न च दीधितिकारमते पर्य्याप्तिनिवेशस्याधिक्येन गौरवमिति वाच्यम्?

द्रव्यत्वादेर्वाच्यत्वमतेऽपि द्रव्यत्वावच्छिन्नत्वद्रव्यदजन्यबोधीयविषयतात्वोभयधर्म्मपर्य्याप्तावच्छेदकताकत्वस्य प्रकारतायामवश्यं निवेशनीयत्वेन गौरवानकाशाद्, अन्यथा द्रव्यपदाद् गुणवद्द्रव्यत्वेन द्रव्यं बोद्धव्यमित्याद्याधुनिकसङ्केतग्रहाद् ( द्रव्यत्वमात्रप्रकारेण द्रव्यबोधानुदयेन व्यभिचारापत्तेः ),

न च तादृशाधुनिकसङ्केतज्ञानस्य तादृशशक्तिज्ञानकारणान्तर्भावमवलम्ब्य नोक्तापत्तिर्दत्ता; अपि तु फलबलेन तादृशज्ञानस्य स्वतन्त्रभवदभिमतकारणताकल्पनेनेति वाच्यम् ?

यस्मादापत्तिदानाय न केन चित् किमपि कल्प्यते तस्मात् फलोत्पादोऽपि सविवादः, अनुभवेनाप्येकशेषस्य दुष्करत्वं च,

नन्वेवमपि तादृशापत्तिर्मा भूत् किन्तु दीधितिकारमते तादृशाधुनिकसङ्केतिग्रहाद् गुणवत्त्वादिना द्रव्यादेर्बोधानुपपत्तिदोषो दुर्वार इति चेद् ?

न-तस्येष्टत्वाद्, द्रव्यपदाद् गुणवद्बोद्धव्यमित्याकारकाधुनिकसङ्केतेनैव तादृशबोधोदयाद्,

---

() एतदन्तर्गतं-केवलद्रव्यत्वप्रकारकबोधापत्तेः, इति पाठान्तरम् ।

अथ वा तादृशसङ्केतग्रहात् तादृशबोधस्यानुभवविषयत्वं चेद् ? अगत्या स्वजन्यबोधीयगुणवत्त्वावच्छिन्नविषयतात्वावच्छिन्नप्रकारताकसङ्केतीयविशेष्यतासम्बन्धेन द्रव्यपदप्रकारकगुणवत्त्वावच्छिन्नविशेष्यताकज्ञानत्वेन स्वातन्त्र्येणैव हेतुतायाः कल्पनेन तादृशसङ्केतग्रहात्तादृशबोधजननात् स्यादेवमेतदतिरिक्तकल्पने गौरवं न स्याद्, भट्टाचार्य्यमतेऽपि तत्कल्पनाया आवश्यकत्वाद्,

अथैवमपि तद्धर्म्मप्रकारकशाब्दबोधं प्रति सङ्केतीयतादृशविशेष्यतायास्तद्धर्म्मावच्छिन्नत्वेनावगाहिज्ञानमेव कारणमिति नियमो भज्येतेति चेद् ?

न-शक्तिज्ञान एव तादृशनियमस्वीकाराद्,

न च तथाऽपि द्रव्यपदाद् गुणवद् बोद्धव्यमिति सङ्केतग्रहात् तादृशबोधस्य भट्टाचार्य्येणास्वीकारात् तादृशकारणत्वाकल्पनेन लाघवमिति वाच्यम् ?

तथा सति दीधितिकारेणापि द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यमित्याकारकसंकेतग्रहाद् गुणवद्बोधस्यानङ्गीकारेण तदकल्पनाल्, लाघवस्य तुल्यत्वादिति यदि सूक्ष्ममीक्ष्यते; तदा दीधितिकारमतं ब्रह्मणोऽपि दूषयितुमशक्यमिति ध्येयम् ।

इति सामान्यकाण्डविवृतिः ।



अथ

## सविवृतिके शक्तिवादे

# विशेषकाण्डः ।

*अथ पदार्थांश इव प्रकारीभूतधर्म्मांशेऽपि वाच्यत्वग्रहस्यापेक्षितत्वआकाशपदाच्छब्दाश्रयतया बोधो न स्यात् शब्दाश्रयत्वस्य आकाशपदावाच्यतायाः सिद्धान्तसिद्धत्वाद्द अतएव तद्वारणायैव प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणोपादानमिति चेद्व ?

न—शब्दाश्रयत्वस्याकाशपदवाच्यत्वमनङ्गीकर्तृभिः प्राचीनैराकाशपदादाकाशांशे तदुपस्थाप्यधर्म्माप्रकारकशाब्दबुद्धेरेवोपगमात्,

तदुक्तम्—"अस्तु वा पदादपि निर्विकल्पकामिति," निर्व्विकल्पकत्वञ्च तदंशे तत्पदोपस्थाप्याप्रकारकत्वं; न तु तदंशे सामान्यतोनिष्प्रकारकत्वं, विभक्त्युपस्थापितैकत्वादीनां तदंशे प्रकारताया आवश्यकत्वात्, तेन समं पदार्थान्तरस्य संसर्गानवगाहने तादृशबो-

सिद्धान्तसिद्धत्वादिति शास्त्रकाराद्यवधारणविषयत्वादित्यर्थः । तद्वारणायेति । शब्दाश्रयत्वे प्रवृत्तिनिमित्तत्ववारणायेत्यर्थः । तदुपस्थाप्येति । आकाशपदोपस्थाप्येत्यर्थः । धर्म्माप्रकारकेति । स्वजन्यबोधीयनिरवच्छिन्नविषयतानिष्ठप्रकारतानिरूपितसङ्केतीयविशेष्यतासम्बन्धेनाकाशपदवान् शब्दाश्रय इत्याकारकज्ञानत्वेनाकाशनिष्ठनिरवच्छिन्नविषयताशालिशाब्दं प्रति हेतुत्वावगमादिति भावः ।

तदंश इति । तत्पदशक्यांश इत्यर्थः । तत्पदोपस्थाप्येति । आकाशादिपदोपस्थाप्यशब्दाश्रयत्वेत्यर्थः ।

नन्वाकाशैकत्वयोः समूहालम्बनबोधस्वीकारे का क्षतिरिति ? अत आह—तेनेति । आकाशेनेत्यर्थः ।

* प्राचीनपुस्तकानुरोधादध्यापकसंप्रदायानुसारात शब्दविशेषशक्तिविचारारम्भस्वारस्याच्चेत एव विशेषकाण्डारम्भः ।

धस्य शाब्दत्वासम्भवाच्च,

वस्तुतस्तु—तत्र निर्व्विकल्पकपदं तत्पदोपस्थाप्यवस्त्वविशेषित-धर्म्मिविषयकशाब्दानुभवजनकनिर्विकल्पस्मरणपरम्; अत एव तत्र निर्व्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः; अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वादित्याशङ्क्य प्रकारान्तरेण तादृशस्मरणमुपपादितं मिश्रैः,

अत्र च मते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थानुभवप्रकारत्वासम्भवादाकाशवासीत्यादौ शाब्दबोधानुपपत्तिः, अन्वयिताऽवच्छेदकावच्छिन्न एव पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति पदार्थ इव पदार्थप्रकारीभूतधर्म्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवा-

---

एतद्व्याख्याने शब्दाश्रयत्वप्रकारकोपस्थितेः स्वरूपत आकाशशाब्दजननेऽनुभवविरोधो, निर्विकल्पकपदस्य संसर्गानवगाहिज्ञानरूपमुख्यार्थपरित्यागतो न्यूनता च स्यादित्यत आह—वस्तुतस्त्विति। तत्पदेति। आकाशपदेत्यर्थः। तदुपस्थाप्यं यद्वस्तु=तदविशेषितधर्म्मी, तद्विषयकशाब्दानुभवजनकेत्यर्थः। प्रकारान्तरेणेति। तद्धर्म्मनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपिततद्धर्म्मिनिष्ठविषयताशालिस्मरणं प्रति तद्धर्म्मनिष्ठप्रकारतानिरूपिततद्धर्म्मिनिष्ठविशेष्यताशाल्यनुभवत्वेन कारणताकल्पनेनेत्यर्थः, तादृशस्मरणञ्च यदा प्रकारांशे नोद्बोधकस्य धर्म्म्यंश एवोद्बोधकस्य सम्बलनं तदैव, तत्कल्प्यते च फलबलादिति मिश्राणामाशयः।

अत्र च मत इति। आकाशादिपदानां स्वरूपतः शक्तिवादिमत इत्यर्थः। जात्येति। जातिपदमखण्डोपाध्युपलक्षकं, तेन जात्यखण्डोपाध्यतिरिक्तस्येत्यर्थः। तस्य=आकाशस्य, स्मृतौ स्वरूपत आकाशस्य प्रकारत्वसम्भवादाह—पदार्थानुभव इति। प्रकारत्वासम्भवादिति। योग्यताज्ञानादीनामाकाशांशे किञ्चिद्धर्म्मभानं विना जननासम्भवात्, तत्र यस्य यद्रूपेण भानं तस्य तद्रूपेणैव शाब्दबोधजननादिति भावः।

जात्यखण्डोपाध्यतिरिक्तपदार्थस्यापि स्वरूपतः कथञ्चिद्भानाङ्गीकारेणात्र बाधनिश्चयाप्रतिबध्यतया योग्यताज्ञानस्य कारणत्वाकल्पनेन च लक्षणया वा तदुपपादने त्वाह—अन्वयिताऽवच्छेदकेति। गगनमित्यादिवाक्यजन्यबोधानुरोधादिति, इष्टापत्तौ शब्दाश्रयो नैक इति बाधनिश्च-

दिपदवाच्यत्ववत् शब्दाश्रयत्वस्याकाशपदवाच्यत्वमस्त्येव,

अत एव दीधितिकृता गुणटिप्पण्यां रूपग्रन्थे "अत्रेदं तत्त्वमि"त्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषं व्युत्पाद्य प्रकाशस्थप्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणस्योपादानं दूषितमेव,

प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारतायां शक्यताऽवच्छेदकत्वस्य प्रयोजकत्वमुपगम्य शक्यताऽवच्छेदके शक्तिर्दूषितैव, तत्रोक्तानुपपत्तिश्चिन्त्या ।

यत्तु-शक्त्याऽऽकाशपदादष्टद्रव्यातिरिक्तद्रव्यत्वादिनाऽप्याकाशबोधो भवति न तु नियमतः शब्दाश्रयत्वेनैव तथा सत्याकाशः शब्दाश्रय इति सहप्रयोगस्य मुख्यताऽनुपपत्तिः, प्रत्येकं नानाधर्म्मविशिष्टएवाकाशे तत्पदस्य नानाशक्तिकल्पनं तु न सम्भवति नानाधर्म्मावच्छिन्नैकधर्म्मिण्येकपदवाच्यतायाः क्वाप्यदृष्टत्वादिति शब्दाश्रयत्वोपलक्षित एवाकाशपदशक्तिरिति प्राचीनमतमेव साधु,

उपलक्षणस्यापि विशिष्टावाचकपदजन्यशाब्दबोधे प्रकारत्वे न किञ्चिद् बाधकम्,

न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्येवाविशेषात्प्रमेयत्वादेरप्याकाशपदजन्यानुभवप्रकारताऽऽपत्तिरिति वाच्यम् ?

---

यकाले सर्व्वानुभवविरुद्धस्य तादृशबोधस्यापत्तेरिति भावः ।

अत्र दीधितिकृत्सम्मतिं दर्शयति—अतएवेति । शब्दाश्रयत्वस्य शक्यताऽवच्छेदकत्वादेवेत्यर्थः । गुणटिप्पण्यां=गुणप्रकाशटिप्पण्याम् । गोत्वादिनेति । दृष्टान्तेनेत्यर्थः । अविशेषं=तुल्यानुभवयुक्तिकत्वं, व्युत्पाद्य=प्रदर्श्य, पदार्थांश इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्य च प्रकारतायामित्यत्रान्वयः, शक्यताऽवच्छेदकत्वस्य=सङ्केतीयविशेष्यताऽवच्छेदकत्वस्य, शक्तिः=पदजन्यबोधविषयत्वेन सङ्केतीयविषयत्वम्, उक्तानुपपत्तिः=गुणवत्त्वेन द्रव्यपदादित्याद्यनुपपत्तिः । सहप्रयोगस्येति । एकार्थकपदद्वयप्रयोगस्येत्यर्थ इति केचित् । मुख्यतेति । सा च शक्त्या स्वार्थप्रतिपादकता, अत्राकाशपदस्य शब्दाश्रयस्य शक्यार्थस्य बोधकता न सम्भवति-उद्देश्यताविधेयताऽवच्छेदकयोरैक्येनान्वयानुपपत्तेः, लक्षण-

धस्य शाब्दत्वासम्भवाच्च,

वस्तुतस्तु–तत्र निर्व्विकल्पकपदं तत्पदोपस्थाप्यवस्त्वविशेषित-धर्म्मिविषयकशाब्दानुभवजनकनिर्विकल्पस्मरणपरम्; अत एव तत्र निर्व्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः; अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वादित्याशङ्क्य प्रकारान्तरेण तादृशस्मरणमुपपादितं मिश्रैः,

अत्र च मते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थानुभवप्रकारत्वासम्भवादाकाशवासीत्यादौ शाब्दबोधानुपपत्तिः, अन्वयिताऽवच्छेदकावच्छिन्न एव पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति पदार्थ इव पदार्थप्रकारीभूतधर्म्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवा-

---

एतद्व्याख्याने शब्दाश्रयत्वप्रकारकोपस्थितेः स्वरूपत आकाशशाब्दजननेऽनुभवविरोधो, निर्विकल्पकपदस्य संसर्गानवगाहिज्ञानरूपमुख्यार्थपरित्यागतो न्यूनता च स्यादित्यत आह—वस्तुतस्त्विति । तत्पदेति । आकाशपदेत्यर्थः । तदुपस्थाप्यं यद्वस्तु=तदविशेषितधर्म्मी, तद्विषयकशाब्दानुभवजनकेत्यर्थः । प्रकारान्तरेणेति । तद्धर्म्मनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपिततद्धर्म्मिनिष्ठविषयताशालिस्मरणं प्रति तद्धर्म्मनिष्ठप्रकारतानिरूपिततद्धर्म्मिनिष्ठविशेष्यताशाल्यनुभवत्वेन कारणताकल्पनेनेत्यर्थः, तादृशस्मरणञ्च यदा प्रकारांशे नोद्बोधकस्य धर्म्यंश एवोद्बोधकस्य सम्बलनं तदैव, तत्कल्प्यते च फलबलादिति मिश्राणामाशयः ।

अत्र च मत इति । आकाशादिपदानां स्वरूपतः शक्तिवादिमत इत्यर्थः । जात्येति । जातिपदमखण्डोपाध्युपलक्षकं, तेन जात्यखण्डोपाध्यतिरिक्तस्येत्यर्थः । तस्य=आकाशस्य, स्मृतौ स्वरूपत आकाशस्य प्रकारत्वसम्भवादाह—पदार्थानुभव इति । प्रकारत्वासम्भवादिति । योग्यताज्ञानादीनामाकाशांशे किञ्चिद्धर्म्मभानं विना जननासम्भवात्, तत्र यस्य यद्रूपेण भानं तस्य तद्रूपेणैव शाब्दबोधजननादिति भावः ।

जात्यखण्डोपाध्यतिरिक्तपदार्थस्यापि स्वरूपतः कथञ्चिद्भानाङ्गीकारेणात्र बाधनिश्चयाप्रतिबध्यतया योग्यताज्ञानस्य कारणत्वाकल्पनेन च लक्षणया वा तदुपपादने त्वाह—अन्वयिताऽवच्छेदकेति । गगनमित्यादिवाक्यजन्यबोधानुरोधादिति, इष्टापत्तौ शब्दाश्रयो नेक इति बाधनिश्च-

दिपदवाच्यत्ववत् शब्दाश्रयत्वस्याकाशपदवाच्यत्वमस्त्येव,

अत एव दीधितिकृता गुणटिप्पण्यां रूपग्रन्थे "अत्रेदं तत्त्व-मि"त्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषं व्युत्पाद्य प्रकाश-स्थप्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणस्योपादानं दूषितमेव,

प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारतायां शक्यता-ऽवच्छेदकत्वस्य प्रयोजकत्वमुपगम्य शक्यताऽवच्छेदके शक्तिर्दूषितैव, तत्रोक्तानुपपत्तिश्चिन्त्या ।

यत्तु-शक्त्याऽऽकाशपदादटष्टद्रव्यातिरिक्तद्रव्यत्वादिनाऽप्याका-शबोधो भवति न तु नियमतः शब्दाश्रयत्वेनैव तथा सत्याकाशः शब्दाश्रय इति सहप्रयोगस्य मुख्यताऽनुपपत्तिः, प्रत्येकं नानाध-र्म्मविशिष्टएवाकाशे तत्पदस्य नानाशक्तिकल्पनं तु न सम्भवति ना-नाधर्म्मावच्छिन्नैकधर्म्मिण्येकपदवाच्यतायाः क्वाप्यदृष्टत्वादिति शब्दाश्रयत्वोपलक्षित एवाकाशपदशक्तिरिति प्राचीनमतमेव साधु,

उपलक्षणस्यापि विशिष्टावाचकपदजन्यशाब्दबोधे प्रकारत्वे न किञ्चिद् बाधकम्,

न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्येवाविशेषात्प्रमेयत्वादेरप्या-काशपदजन्यानुभवप्रकारताऽऽपत्तिरिति वाच्यम् ?

---

यकाले सर्व्वानुभवविरुद्धस्य तादृशबोधस्यापत्तेरिति भावः ।

अत्र दीधितिकृत्सम्मतिं दर्शयति—अतएवेति । शब्दाश्रयत्वस्य श-क्यताऽवच्छेदकत्वादेवेत्यर्थः । गुणटिप्पण्यां=गुणप्रकाशटिप्पण्याम् । गोत्वादिनेति । दृष्टान्तेनेत्यर्थः । अविशेषं=तुल्यानुभवयुक्तिकत्वं, व्युत्पाद्य= प्रदर्श्य, पदार्थांश इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्य च प्रकारतायामि-त्यत्रान्वयः, शक्यताऽवच्छेदकत्वस्य=सङ्केतीयविशेष्यताऽवच्छेदकत्व-स्य, शक्तिः=पदजन्यबोधविषयत्वेन सङ्केतीयविषयत्वम्, उक्तानुपप-त्तिः=गुणवत्त्वेन द्रव्यपदादित्याद्यनुपपत्तिः । सहप्रयोगस्येति । एकार्थक-पदद्वयप्रयोगस्येत्यर्थ इति केचित् । मुख्यतेति । सा च शक्त्या स्वार्थ-प्रतिपादकता, अत्राकाशपदस्य शब्दाश्रयस्य शक्यार्थस्य बोधकता न सम्भवति-उद्देश्यताविधेयताऽवच्छेदकयोरैक्येनान्वयानुपपत्तेः, लक्षण-

तत्प्रकारकशाब्दबोधे तदंशेऽनतिप्रसक्तत्वरूपशक्यताऽवच्छेदकत्वावगाहित्वेनोपलक्षिते शक्तिज्ञानस्य हेतुत्वादिति,

तन्न-आकाशः शब्दाश्रय इति सहप्रयोगस्य मुख्यत्वासिद्ध्याऽष्टद्रव्यातिरिक्तद्रव्यत्वाकाशपदवाच्यत्वाद्येकतररूपेण लक्षणाया एव तत्रोपगमाद्,

*एवञ्च यत्र सुवर्णवहनयोग्यगवादिरूपविशेषपरसामान्यवाचकपदघटितं द्रव्यं नास्ति गौर्नास्तीत्यादिकं वाक्यं प्रयुज्यते; तत्र विशेषधर्म्मावच्छिन्ने लक्षणैव, विशेषधर्म्मस्य सामान्यशब्दावाच्यतया शक्त्या तद्रूपप्रकारकबोधानिर्व्वाहाद्,

---

याऽऽकाशपदार्थत्वावच्छिन्नबोधकत्वेऽन्वयोपपत्तावपि मुख्यताहान्यापत्तेरिति भावः। अनतिप्रसक्तेति। न च गगननिष्ठतद्व्यक्तित्वस्य शब्दध्वंसस्य चानतिप्रसक्ततया तत्तद्रूपेणाप्याकाशादिपदाच्छाब्दबोधापत्तिरिति वाच्यम्? इष्टत्वात्। हेतुत्वादिति। एतन्मत आकाशादिपदजन्यबोधविषतावान् भवत्वित्याकारक आकाशविशेष्यको भगवत्सङ्केतः, शब्दाश्रयत्वाद्यन्यूनानतिरिक्तवृत्तिकसङ्केतीयविशेष्यतासम्बन्धेनाकाशपदवान् शब्दाश्रय इत्याद्याकारकं ज्ञानं हेतुरिति भावः। मुख्यत्वासिद्ध्येति। प्रमाणाभावेनेति शेषः। अष्टद्रव्यातिरिक्तेति। पृथिवीत्वादिप्रत्येकधर्म्मावच्छिन्नभेदाष्टववदित्यर्थः।

ननु पदानां तत्तद्धर्म्मोपलक्षितावाचकत्वे सुवर्णादितात्पर्य्येणापि लोकैर्द्रव्यादिपदं प्रयुज्यते तत्र का गतिः? इत्यत आह—एवञ्चेति। पदानामुपलक्षितावाचकत्वे चेत्यर्थः। द्रव्यान्तरवति द्रव्यं नास्तीति प्रयोगो द्रव्यपरत्वे न सम्भवति; अपि तु सुवर्णादिपरत्व एवेति विशेसूचनाय नञ्पदघटितवाक्यमुक्तम्, एवं गवान्तरवति गौर्नास्तीति प्रयोगेऽपि बोध्यं, प्रथमे शक्यताऽवच्छेदकं परित्यज्य सुवर्णत्वावच्छिन्ने लक्षणा, द्वितीये तु शक्यताऽवच्छेदकगोत्वघटितहलवहनयोग्यताविशिष्टगोत्वावच्छिन्ने सेति विशेषसूचनाय द्वयमुपात्तम्। बोधानिर्व्वाहादिति। तथा च तत्पदजन्यतद्धर्म्मपर्य्याप्तप्रकारताकशाब्दबोधं प्रति तद्धर्म्मपर्य्याप्तावच्छेदकताकत्वस्वजन्यबोधीयविषयतात्वोभयधर्म्माव-

---

* यद्यपि पुस्तकान्तरेषु किलेह "यदि चेत्यादिध्येयमि"त्यन्तपाठोत्तरम् "एवंचेत्यादिहेयमि"त्यन्तः पाठः; तथाऽपि प्रकृतटीकाऽनुरोधादेनयोर्व्यतिव्यवहारः।

एवं यत्र दुःखासम्भिन्नसुखत्वधानकर्म्मगोत्वादिविशिष्टवाचकं-स्वर्गधेन्वादिपदं केवलसुखत्वगोत्वाद्यवच्छिन्नतात्पर्य्येण प्रयुज्यते; तत्र लक्षणैव, शक्त्या प्रवृत्तिनिमित्तैकदेशं परित्यज्य न बोध इत्यनुभवनिर्व्वाहाय शुद्धतद्धर्म्मप्रकारकशाब्दबोधे तदन्यरूपावच्छिन्नत्वानवच्छिन्नबोधविशेषविषयत्वीयप्रकारतात्वेन प्रकारताघटितसम्बन्धावगाहिशक्तिज्ञानस्य कारणत्वमुपगन्तव्यम् ,

शक्यताऽवच्छेदके शक्यत्वानभ्युपगन्तृमते तादृशबोधे तद्रूपांशे सङ्केतविशेष्यताऽवच्छेदकतापर्य्याप्त्यवगाहिज्ञानत्वेन हेतुत्वान्नोक्तातिप्रसङ्ग इति तूक्तानुपपत्त्या हेयम् ।

यदि चाकाशः शब्दाश्रयइत्यादिवाक्यस्थमाकाशपदं मुख्यमेव निर्द्धर्म्मिताऽवच्छेदककश्च नान्वयबोधः कुत्रापि, तदाऽऽकाशदिपदात् शक्त्याऽष्टद्रव्यातिरिक्तद्रव्यत्वादिना बोधनिर्व्वाहाय विशिष्टावाच-

---

च्छिन्नप्रकारताकसङ्केतीयविशेष्यतासम्बन्धेन पदप्रकारकार्थविशेष्यकज्ञानत्वेन हेतुत्वादिति भावः ।

न्यूनधर्म्मावच्छिन्नबोधनस्थलेऽपि लक्षणामाह—एवमिति । उक्तस्थलवदित्यर्थः । दुःखासम्भिन्नेति । तत्त्वञ्च स्वाव्यवहितोत्तरत्वस्वावच्छेदकीभूतशरीरावच्छिन्नत्वस्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन दुःखविशिष्टान्यत्वम् । शुद्धतद्धर्म्मेति । तद्धर्म्मनिष्ठप्रकारतानिरूपिता सती तदन्यधर्म्मनिष्ठप्रकारत्वानिरूपिता या विशेष्यता तच्छालिशाब्दबोधं प्रति तद्धर्म्मावच्छिन्नत्वावच्छिन्नतादितरधर्म्मानवच्छिन्नत्वावच्छिन्नस्वजन्यबोधीयविषयतात्वावच्छिन्नसङ्केतीयप्रकारताकविशेष्यतासम्बन्धेन स्वर्गादिपदवत् सुखमित्याकारकं ज्ञानं हेतुः, हेतुता च तद्धर्म्मावच्छिन्नत्वावच्छिन्नत्वावच्छिन्ना सती तदितरधर्म्मावच्छिन्नत्वाभावावच्छिन्नत्वावच्छिन्ना सती स्वजन्यबोधीयविषयतात्वावच्छिन्नत्वावच्छिन्ना सती सङ्केतीयप्रकारतात्वावच्छिन्ना या विशेषणता तन्निरूपितविशेष्यतात्वावच्छिन्नसंसर्गताकस्वर्गादिपदत्वावच्छिन्नप्रकारताकसुखत्वादिधर्म्मावच्छिन्नविशेष्यताशालिनिश्चयत्वेनेति ध्येयम् ।

दीधितिकारमतेऽप्युक्तापत्तिवारणप्रकारं दर्शयति—शक्यताऽवच्छेदकइति । आकाशपदस्य स्वरूपतः शक्तिवादिनामाचार्य्याणां मतं परिष्क-

काकाशादिपदस्य प्रकारांशे वाच्यत्वानवगाहिशक्तिग्रहस्यैव तद्धर्म्मा-वच्छिन्नविशेष्यकतत्तद्धर्म्मप्रकारकान्वयबोधहेतुत्वमगत्या स्वीकार्य्यं, विशिष्टवाचकगवादिपदस्य च प्रकारांशे वाच्यत्वावगाहिशक्तिज्ञान-मेव तद्धर्म्मप्रकारकशाब्दबोधहेतुरिति न शक्तिभ्रमलक्षणाग्रहमन्तरेण गवादिपदाद्‌ गोपदवाच्यत्वाद्यवाच्यधर्म्मप्रकारको बोधः,

आकाशादिपदमिव गवादिपदमपि विशिष्टावाचकमिति भ्रम-वतो गवादिपदादवाच्यधर्म्मप्रकारकबोधानिर्व्वाहाय तद्धर्म्मप्रका-रकशाब्दबोधे तद्धर्म्मसामानाधिकरण्यमात्रावगाहितत्पदवाच्यताऽव-गाहिग्रहस्य हेतुत्वेऽपि तद्धेतुतायां वाच्यतांऽशे विशेषणानन्तर्भावि-

रीति—यदि चेति । तच्च मुख्यत्वे विवादसूचनाय । प्रकारांश इति । स्व-जन्यबोधीयविषयतात्वावच्छिन्नप्रकारतानिरूपितसङ्केतीयविशेष्यतास-म्बन्धेनाकाशपदप्रकारकशब्दाश्रयत्वावाच्छिन्नविशेष्यकज्ञानं शब्दाश्र-यत्वप्रकारकशाब्दबोधं प्रति हेतुः,

एवं तादृशविशेष्यतासम्बन्धेनाकाशपदप्रकारकाष्टद्रव्यातिरिक्त-द्रव्यत्वावच्छिन्नविशेष्यताकज्ञानमष्टद्रव्यातिरिक्तद्रव्यत्वप्रकारकशाब्दं प्रति कारणमिति ।

एवं रीत्यैव गगनकालदिक्शब्देऽपि हेतुहेतुमद्भावो बोध्यः । गोपदवाच्यत्वादीति । गोपदवाच्यत्वादिरूपो योऽवाच्यधर्म्मः तत्प्रकारक इत्यर्थः । विशिष्टावाचकमितीति । किञ्चिद्धर्म्मावच्छिन्नत्वानवच्छिन्ना या तत्तत्पदजन्यबोधीयविषयतात्वावच्छिन्ना सङ्केतीयप्रकारता तन्निरूपित-विशेष्यतायाः परम्परया निरूपकमितीत्यर्थः, तत्तद्धर्म्मसामानाधिकरण्य-मात्रावगाहीति । अवच्छिन्नत्वसम्बन्धेन गोपदवाच्यत्वादिसमानाधि-करणा या गवादिपदजन्यबोधीयविषयतात्वावच्छिन्ना सङ्केतीयप्रका-रता तन्निरूपितविशेष्यतासम्बन्धेन गवादिपदप्रकारकगोपदवाच्यादि-विशेष्यकं ज्ञानं हेतुरिति भावः,*

विशेषणानन्तर्भावित्वेति । तादृशकारणताऽवच्छेदककोटौ प्रकारत्वांशे किञ्चिद्धर्म्मावच्छिन्नत्वानवच्छिन्नत्वमपि विशेषणीयं; तथा च गवादि-

* वस्तुतस्तु—विषयतायामेव तद्धर्मसामानाधिकरण्यावगाही शक्तिग्रहोऽत्र वाच्यो न तु प्रकारतायामवच्छिन्नत्वघटितसामानाधिकरण्यस्यावगाही; तथा सति विषयतायास्तत्त-द्व्यक्तित्वानवच्छिन्नत्वेनैव भ्रमत्वसम्भवेऽग्रे भ्रमत्वोपपादनवैयर्थ्यात् ।

त्वावगाहित्वमप्यवच्छेदकमुपेयतेऽतोऽवाच्यधर्म्मप्रकारकबोधहेतुगवादि-पदशक्तिग्रहस्य भ्रमत्वनियमः, अतो नाभ्रान्तपुरुषस्य ततस्तादृश-बोध इति बोध्यम् ।

प्राभाकरास्तु—धेनुपदस्य धानकर्म्मताविशिष्ट एव शक्तिर्न

---

पदजन्यबोधियाविषयतात्वावच्छिन्नत्वाकिञ्चिद्धर्म्मावच्छिन्नत्वावच्छिन्न-त्वाभावोभयधर्म्मावच्छिन्नसङ्केतीयप्रकारतात्वावच्छिन्नविशेषणताकवि-शेष्यतात्वावच्छिन्नसंसर्गताकगवादिपदत्वावच्छिन्नप्रकारताकगोपदवा-च्यत्वाद्यवच्छिन्नविशेष्यताकज्ञानत्वेन हेतुतेति, कार्यताऽवच्छेदक-ञ्च—तादृशविशिष्टावाचकत्वज्ञानाव्यवहितोत्तरगवादिपदज्ञानजन्यगोप-दार्थत्वादिप्रकारकशाब्दत्वमतो गवादिपदानां गोपदवाच्यत्वादिवि-शिष्टवाचकत्वभ्रमजन्यतादृशशाब्दबोधे न व्यभिचारः, विशिष्टशक्ति-ज्ञानकार्यकारणभावस्तु पूर्वरीत्यैव बोध्यः,

तत्रापि विशिष्टवाचकत्वज्ञानाव्यवहितोत्तरत्वानिवेशान्न व्यभिचार इति ध्येयम् ।

भ्रमत्वनियम इति । गोपदादिसङ्केतीयप्रकारतायां किञ्चिद्धर्मावच्छि-न्नत्वावच्छिन्नत्वसत्त्वेन तदभावावगाहने भ्रमत्वमेवेति ।

शक्त्युपाधिवादिनां गुरूणां मतमुत्थापयति—प्राभाकरास्त्विति । धानकर्म्मताविशिष्ट एवेति । धानकर्म्मता च दुग्धपानकर्म्मता, दुग्धपानञ्च दुग्धप्रतियोगिकविभागजनकत्वे सति दुग्धप्रतियोगिकगलाधःसंयो-गानुकूलो यो व्यापारस्तद्रूपं, तत्कर्म्मता च तादृशविभागानुयोगि-त्वं तदाश्रयतया गवादिकं कर्म्म; अतएव गां धयति स्तनं पिबतीत्या-दिकः प्रयोगः,

ननु गवादिपदानां गोत्वादाविव धेनुपदस्य धानकर्म्मत्वे कुतो न शक्तिरिति चेद् ?

न–यस्माद् यद् येन विना न भासते तद्भासकसामग्र्येव तद्भास-यति न तु तद्भानार्थं सामग्र्यन्तरं, जातिस्तु व्यक्तिं विना न भा-सत इति जातिभासकसामग्री व्यक्तिं भासयति; अतो व्यक्तिभाने न सामग्र्यन्तरकल्पनं, धानकर्म्मता च व्यक्तिं विनाऽपि भासतेऽतस्त-द्भानसामग्र्या व्यक्तिभानसम्भवाभावात् तद्भानार्थं धानकर्म्मतावि-शिष्टे शक्तिरावश्यकी,

तु गोत्वमपि विशेषणं, गोत्वस्य शक्त्युपाधित्वेन शक्तिनियन्त्रकत्वाद् धानकर्मत्वस्य महिष्यादिसाधारणत्वेऽपि न धेनुपदात्तद्बोधः,

न च धेनुपदाद् गोत्वप्रकारकबोधस्यानुभविकतया धानकर्म्ममहिष्यादिमति देशे धेनुर्नास्तीति विशेषदर्शिनां प्रयोगस्य मुख्यतया च धेनुपदजन्यबोधे गोत्वभानमवश्यमङ्गीकरणीयं; तथा च धानकर्म्मत्ववद् गोत्वेऽपि शक्तेरावश्यकतयाऽशक्यस्यापि प्रकारतया शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया शाब्दबुद्धौ भानापत्तिरिति वाच्यम् ?

शाब्दबोधेऽशक्यस्य गोत्वादेः प्रकारतया भाने शक्यताऽवच्छेदकत्वस्य नियामकत्वाद्, गोत्वस्य चाशक्यत्वेऽपि शक्यतायामवच्छेदकताऽऽत्मकसम्बन्धविशेषोपगमाद् द्रव्यत्वादेश्चातथात्वेनातिप्रसङ्गविरहाद्,

---

एवकारव्यवच्छेद्यं स्पष्टयति—न तु गोत्वमपीति। विशेषणमिति। शक्ताविति शेषः,

ननु धेनुपदस्य यदि धानकर्म्मतामात्रविशिष्टे शक्तिस्तदा धानकर्म्मत्वेन कुतो न महिष्यादीनां धेनुपदशक्यत्वं न वा तद्बोध इति ? अत आह—गोत्वस्येति। शक्त्युपाधित्वेनेति। सम्बन्धान्तररूपशक्तिकल्पनस्य धर्म्मिताऽवच्छेदकत्वेन शक्त्यभावप्रयोजकाभावप्रतियोगित्वेनेत्यर्थः, तत्तु—अशक्यत्वे सति शक्यताऽवच्छेदकत्वमिति तु यावत्, शक्तिनियन्त्रकत्वात्=शक्तिसङ्कोचकत्वात्; तत्सत्ताप्रयोजकस्वसत्ताकत्वादिति तु पर्य्यवसितम्, तद्बोध इति। महिष्यादिबोध इत्यर्थः, तत्र गोत्वाभावेन शक्त्यभावादिति भावः।

ननु धेनुपदजन्यबोधे गोत्वाभाने महिष्यादिमद्देशे धानकर्म्मतात्वावच्छिन्नाधिकरणतया धेनुर्नास्तीति प्रयोगानुपपत्तिरतो गोत्वभानमावश्यकं तच्च शक्तिभ्रमेण लक्षणया वोपपादनीयमिति ? अत आह—विशेषेति मुख्यतयेति च। समाधत्ते—शाब्दबोध इति। नियामकत्वादिति। तथा च तत्तत्पदजन्यतत्तद्धर्म्मप्रकारकशाब्दबोधं प्रति तत्तद्धर्म्मावच्छिन्नशक्यताकत्वसम्बन्धेन तत्तद्धर्म्मावच्छिन्नप्रकारकपदविशेष्यकज्ञानं हेतुरिति भावः।

न च गोत्वस्य वृषभादिसाधारणस्यातिप्रसक्ततया शक्तौ नावच्छेदकत्वसम्भव इति वाच्यम् ?

अवच्छेदकत्वस्य प्रकृतेऽनतिप्रसक्तत्वानियतत्वान्नियतत्वे वा धानकर्म्मत्वसहितस्यैव तस्यावच्छेदकत्वोपगमाद्,

अथ गोत्वमेव शक्यं धानकर्म्मत्वमेव शक्त्युपाधिरिति वैपरीत्यमेव कुतो न स्याद् ?

वस्तुतो धानकर्मत्वापेक्षया लाघवेन गोत्वस्यैव शक्यत्वमुचितम्,

न च गोत्वमतिप्रसक्तं धानकर्मत्वन्तु धानकर्मव्यक्तिभेदेन भि-

---

नन्वेवं धानकर्म्मत्वादेः शक्यताऽनवच्छेदकत्वेन प्रकारतया तस्य भानानुपपत्तिरिति चेद् ?

न-अग्रे तस्यापि शक्यताऽवच्छेदकत्वाङ्गीकारात्, प्रकृते=एतन्मते, अनतिप्रसक्तत्वानियतत्वादिति । अवच्छेद्यस्येति शेषः, तथा चावच्छेद्यानतिप्रसक्तत्वाव्याप्यत्वादित्यर्थः, अतिप्रसक्तधर्म्मेऽप्यवच्छेदकत्वस्वीकारादिति भावः । धानकर्म्मत्वसहितस्येति । धानकर्म्मत्वगोत्वयोरेकव्यासज्यवृत्त्यवच्छेदकत्वस्वीकारादिति,

अथैतन्मते पदपदार्थयोरतिरिक्त एव सम्बन्धः शक्तिपदार्थो न त्वीश्वरेच्छारूपः; तैरीश्वरानङ्गीकारेणासम्भवात्; तत्प्रतियोगित्वं शक्यत्वं वाच्यं; प्रकारान्तरस्य दुर्व्वचत्वात्, तच्च धानकर्म्मतावतीव धानकर्म्मत्वेऽपि स्वीकार्य्यम्; अन्यथा तस्य शक्यत्वानुपपत्तेः, एवञ्च धानकर्म्मत्वसहितं गोत्वं तन्न्यूनवृत्त्येव तत्र कुतस्तदवच्छेदकत्वसम्भव इति चेद् ?

न-तादृशसम्बन्धप्रतियोगित्वमेकं व्यक्तिनिष्ठम्; अपरञ्च धानकर्म्मत्ववृत्ति; अतो व्यक्तिवृत्तिप्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वस्य तत्र सत्त्वाद्,

एवञ्च शक्तिप्रतियोगित्वे सति शक्तिप्रतियोगिताऽवच्छेदकत्वं विशेषणविषयं शक्यत्वं बोध्यं; तादृशसम्बन्धप्रतियोगिताऽवच्छेदकत्वं विशेषणनिष्ठं शक्यत्वमिति केचिद्,

विशेषणविधया शक्यत्वमेवेतरपदार्थान्वयप्रयोजकम्, अतो न धानकर्म्मत्वादावितरान्वय इत्यलं विस्तरेण ।

शङ्कते—अथेति । शक्यं शक्तिप्रतियोगित्वे सति तदवच्छेदकम्, गोत्वस्यैवेति । गोत्वे निरवच्छिन्नशक्यत्वं वक्तुमर्हत्यतो लाघवमिति

न्नामिति गोनिष्ठं तदनतिप्रसक्तमिति न वैपरीत्यमिति वाच्यम् ?

तस्यातिप्रसक्तत्वेऽपि शक्यत्वोपगमे क्षतिविरहाद् वृषभादिबोधस्य शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतया वारणाद्,

न च गोत्वस्य शक्यत्वे जातिशक्त्यैव व्यक्तिभानसम्भवेनान्यलभ्यतया गवादिपदवद्व्यक्तिशक्त्युच्छेदप्रसङ्गः; तथा च धानकर्मत्वस्य शक्यताऽवच्छेदकत्वानुपपत्त्या वृषभादिबोधो दुर्व्वार एवेति वाच्यम् ?

एतदनुरोधेनापि व्यक्तौ शक्तिस्वीकारसम्भवादिति चेद् ?

---

भावः। जातिशक्त्यैवेति। प्रभाकरमते यद् येन विना न भासते तद्भासकस्यैव तद्भासकत्वं तद्भासकान्तरकल्पने प्रयोजनविरहो गौरवञ्चेति, तथा च जातिर्व्यक्तिं विना न भासत इति जातिभासकसामग्र्या एव व्यक्तिभासकत्वाद्, धानकर्म्मत्वस्य तु दोग्धृव्यापारप्रयोज्यदुग्धविभागरूपस्य जातिभिन्नतया व्यक्तिभानं विनाऽपि भानान्न तद्भासकस्य व्यक्तिभासकत्वमिति भावः,

अथ जातिर्व्यक्तिं विना नेत्यस्य व्यक्त्यविषयकज्ञानाविषयत्वं पर्य्यवसितं वाच्यं; तच्च न सम्भवति, यदा गोत्वादिना गवयादेः प्रत्यक्षादिकं तत्र; गोत्वं नित्यमित्यत्र ज्ञाने च; व्यक्तिभानं विनाऽपि गोत्वादेर्भानादिति चेद् ?

न—व्यक्तिविषयतानिरूपितं यत् सांसर्गिकविषयत्वं तदनिरूपितविषयत्वशून्यत्वं व्यक्तिं विनेत्यादेः पर्य्यवसन्नार्थत्वाद्, अन्यथाख्यात्यनङ्गीकर्त्तॄणां तेषां मते गोत्वादिना गवयादेर्ज्ञाने गोत्वादिवैशिष्ट्यभानेन तत्सम्भवाद्, गोत्वं नित्यमित्यादावपि गवेतरावृत्तित्वरूपगोत्वत्वादेर्भानेन तत्र गवादेर्भानाच्चेति,

वस्तुतस्तु व्यक्तिविषयत्वानिरूपितशाब्दविषयताशून्यत्वं तादृशप्रकारताशून्यत्वं वा तत्पर्य्यवसितार्थो वाच्यः; अतो न पूर्वोक्तदोषः,

एतेन गोत्वेन गवयज्ञानोत्तरं गोत्वेन गवयं जानामीत्यनुव्यवसायादौ गवादेरभानेऽपि न क्षतिर्लाघवञ्चेति, धानकर्म्मत्वं पश्येत्यादौ गवादिव्यक्तिभानं विनाऽपि तद्भानान्न धानकर्म्मत्वभासकसामग्र्या व्यक्तिभासकत्वमिति निगर्व्वः,

गोत्वकर्म्मत्वं गोकर्म्मत्वं विनाऽनुपपन्नमिति ज्ञानसहकृतशाब्दसामग्र्येव व्यक्तिं भासयतीति के चित्,

शक्यताऽवच्छेदकत्वानुपपत्त्येति। धानकर्म्मत्वे गोत्वनिष्ठशक्यत्वसामा-

न—यद्धर्मविशिष्टे शक्तिस्तद्धर्माश्रयस्य यावतः शक्यत्वनियमेन गोत्वस्य शक्यत्वे वृषभादेरपि तथात्वापत्तेः, धानकर्मताविशिष्टाया गोः शक्यत्वे च गोनिष्ठधानकर्मताव्यक्तीनामेव विशेषणतया; तासाञ्च महिष्यादिव्यावृत्ततया महिष्यादेश्च शक्यताऽऽपत्तिविरहादिति वदन्ति,

तन्मते यद्यपि शक्तिज्ञानाधुनिकसङ्केतज्ञानयोः कारणताभेदेन गौरवं न बाधकं; भगवद्विद्वेषिणां मीमांसकानां शक्तेः सङ्केतानात्मकतया तयोरेककारणतायाः कथमप्यसम्भवात्; तथाऽपि गोनिष्ठधानकर्म्मताव्यक्तीनामननतिप्रसक्तानुगतरूपाभावान्न शक्यत्वसम्भवः,

न च सामानाधिकरण्यसम्बन्धेन गोत्वमेव धानकर्मत्वसहितं धानकर्मत्वविशेषाणामनुगमकमिति वाच्यम् ?

---

नाधिकरण्याभावेन तदसम्भवादित्याशयः, तदनुरोधेनापीत्यत्रापिशब्दो व्यक्तावित्यनन्तरं योजनीयं; तेन व्यक्तावपीति लाभः । यावत—इति । अन्यथा पश्वादिपदं लोमवति शक्तमिति निश्चयेऽप्येष पशुपदशक्यो न वेति संशयापत्तेरिति भावः । गोनिष्ठेति । धानकर्म्मतानामाश्रयभेदेन भिन्नत्वादिति भावः ।

प्रभाकरमते गोत्वस्य धेनुपदाशक्यत्वे धानकर्म्मताविशिष्टगोत्वोपलक्षिते शक्तं धेनुपदमित्याकारकशक्तिज्ञानस्य कारणत्वं वाच्यम्; एवञ्च धेनुपदाद् धानकर्म्म गौर्बोद्धव्येत्याकारकाधुनिकसङ्केतज्ञानस्यापि शाब्दबोधजनकतया पृथक्कारणत्वं वक्तव्यम्,

न्यायमते तु तादृशज्ञानस्य शक्तिज्ञानात्मकतया न पृथक् कारणत्वम्; अतस्तन्मते गौरवं भवति, तादृशगौरवस्य तन्मते सार्व्वत्रिकतया गत्यन्तराविरहेण स्वीकृततया तद्दोषेण तन्मतदूषणं सन्दर्भविरुद्धमित्याह—तन्मते यद्यपीति । न शक्यत्वसम्भवः, विशेषणविधया शक्यत्वमित्यर्थः, तथा च नानाव्यक्तीनामेकशक्यत्वकल्पनमनुगतानतिप्रसक्तधर्म्मं विनाऽसम्भवयुक्तिकम्; अन्यथा धेनुपदादेरनन्तगवादिव्यक्तिष्वेकशक्तिकल्पनं शक्यताऽवच्छेदकं विनाऽपि कुतो न स्यादिति भावः ।

सामानाधिकरण्येति । सामानाधिकरण्यसम्बन्धेन धानकर्म्मत्वे वर्त्तमानं सदिति शेषः, गोत्वमेवेति । वह्नित्वसहितं महानसीयत्वं महानसीयवह्नीनामनुगमकमिवेत्यर्थः । अनुगमकमिति । अनुगतव्यवहारनियामकं,-

अशक्येन शक्यानुगमे सर्वत्रैव विशेषणशक्त्युच्छेदप्रसङ्गाद्, अतिप्रसक्तेनापि धानकर्म्मतात्वेन विशिष्टे धानकर्मताविशेषे शक्तिग्रहोपगमे लाघवाद् गोत्वविशिष्टे गोविशेष एव शक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितमननुगतेन तत्तद्धानकर्मतात्वेन शक्तिग्रहोपगमे चापूर्वव्यक्त्यलाभप्रसङ्ग इत्यनुपपत्तिश्चिन्त्या ।

---

यथा नानाधर्म्मविशिष्टैकधर्म्मिवाचकात् पदात् शक्तिप्रमातोनैकधर्म्मं परित्यज्य धर्म्मी प्रतीयते तथा चन्द्रत्वसूर्य्यत्वादिनानाधर्म्मविशिष्टनानाधर्म्मिवाचकपुष्पवन्तादिपदाच्चन्द्रत्वादिकं परित्यज्य न सूर्य्यत्वादिप्रकारको बोधः,

अथात्र हरिपदादिशक्तिज्ञानादिवद् दिवाकरः पुष्पवन्तपदवाच्य इत्याकारकशक्तिज्ञानात् केवलसूर्य्यत्वप्रकारको बोधो दुर्वारः ?

---

तथा च तादृशधर्म्मेणैवानुगतशक्यता सिध्येदित्यर्थः, अथ वा धानकर्म्मताविशेषवृत्त्येकशक्यतासत्त्वप्रयोजकस्वसत्ताकमिति वाऽर्थः । लाघवादिति । धानकर्म्मत्वापेक्षयेत्यर्थः, शक्त्युपाधिरिति । अशक्यत्वे सति शक्यताऽवच्छेदकः; तज्ज्ञानजन्यनियतशाब्दबोधप्रकारो वेत्यर्थः। अपूर्व्वेति। शाब्दबोधे पूर्व्वाननुभूतव्यक्त्यविषयकत्वप्रसङ्ग इत्यर्थः । अयम्भावः—तत्तद्धानकर्म्मताव्यक्तौ शक्तिस्वीकारे व्यवहारेण यद्यद्धानकर्म्मताव्यक्तौ शक्तिर्गृहीता; अनन्तरं धेनुपदघटितवाक्यात् तत्तद्धानकर्म्मत्वव्यक्तेरेव स्मरणेन योग्यताविरहात् शाब्दबोधे भानासम्भव इति ।

---

पुष्पवन्तादिपदानां शक्त्या चन्द्रत्वसूर्य्यत्वादिप्रत्येकधर्म्मेण नियतचन्द्रसूर्य्याद्युभयबोधकत्वस्यानुभवं दृष्टान्तेन द्रढयति—यथा नानेति ।

पदादिति । दुःखासम्भिन्नत्वसुखत्वोभयधानकर्म्मत्वगोत्वोभयादिविशिष्टवाचकस्वर्गधेन्वादिपदादित्यर्थः । पुष्पवन्तादिपदादिति । आदिपदाद् दम्पतिपित्रादिपदपरिग्रहः,

चन्द्रत्वसूर्य्यत्वयोः प्रत्येकधर्म्मेण वाच्यत्वे पुष्पवन्तपदं सूर्य्ये शक्तमित्याकारादिवाच्यत्वग्रहस्यापि प्रमात्वेनाभ्रान्तस्यापि तादृश-

न च पुष्पवन्तपदशक्तिज्ञानेन सूर्य्यत्वादिप्रकारकशाब्दबोधजनने चन्द्रत्वादिप्रकारकशक्तिज्ञानस्यापि सहकारितोपगमान्नातिप्रसङ्ग इति वाच्यम् ?

तस्य हर्य्यादिपदवन्नानाऽर्थत्वग्रहदशायां भ्रान्तस्य केवलसूर्य्यत्वादिप्रकारकबोधस्याप्युत्पत्तेः,

एवं तत्पदस्य हर्य्यादिपदवन्नानाधर्म्मावच्छिन्नवाचकतया नानाऽर्थत्वप्रसङ्गो दुर्वारः,

न चार्थद्वये तस्यैकस्या एव शक्तेरुपगमान्न नानाऽर्थताऽऽपत्तिः; नानाशक्तिमत एव नानाऽर्थत्वोपगमादिति वाच्यम् ?

---

ज्ञानाद् हर्य्यादिपदजन्यः केवलविष्णवादेर्बोध इव शुद्धसूर्य्यादिबोधो दुर्व्वारः कारणविरहादर्शनादित्याशङ्कते—अथेति । कारणाभावं सम्पादयन् कार्य्योत्पत्तिवारणमाशङ्कते--न चेत्यादि । सहकारित्वोपगमादिति । पुष्पवन्तपदशक्तिग्रहजन्यसूर्य्यत्वप्रकारकशाब्दबोधं प्रति पुष्पवन्तपदं चन्द्रत्वावच्छिन्ने शक्तमिति ज्ञानस्य पुष्पवन्तपदशक्तिज्ञानजन्यचन्द्रत्वावच्छिन्नविषयकशाब्दं प्रति पुष्पवन्तपदं सूर्य्ये शक्तमिति ज्ञानस्य च फलानुरोधेन कारणत्वकल्पनादित्यर्थः । नानाऽर्थताग्रहदशायामिति । सूर्य्यत्वावच्छिन्ने चन्द्रत्वावच्छिन्ने च पृथग्वाचकताग्रहदशायामित्यर्थः,

उत्पत्तेरिति । तथा च तदानीं चन्द्रत्वप्रकारकशक्तिज्ञानादेरसत्त्वेन व्यभिचारात् तादृशज्ञानस्य सहकारिताया वक्तुमशक्यत्वादिति भावः ।

तादृशनानाऽर्थताग्रहस्योक्तसहकारितायामुत्तेजकत्वोपगमेन व्यभिचारवारणसम्भवादाह--एवमिति । नानाधर्म्मावच्छिन्नेति । एकधर्म्मिमविशेषणताऽनापन्ननानाधर्म्मावच्छिन्नेत्यर्थः, तेन स्वर्गादिपदानां न तदापत्तिः, नानाऽर्थताऽऽपत्तिः=नानाऽर्थशब्देन व्यवहार्य्यताऽऽपत्तिः, व्युत्पन्नानां पुष्पवन्तशब्दो नानाऽर्थ इति व्यवहाराभावादिष्टापत्तेरयोगादिति भावः ।

यत्तु नानाऽर्थेतत्यस्य नानाशक्यताऽवच्छेदकतात्वेत्यर्थ इति;

तत्तुच्छं-तादृशार्थस्येष्टत्वेनापत्तेरयोगाद्, नानाधर्म्मावच्छिन्नवाच-

शक्यताऽवच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वादवच्छेदकभेदस्यावच्छेद्यभेदनियतत्वाद्, अन्यथा हर्य्यादिपदेष्वपि शक्त्यैक्यापत्तेः,

अत्र शक्त्याख्यपदपदार्थसम्बन्धान्तरवादिमीमांसकानुयायिनः—यथा धानकर्म्मत्वगोत्वादिरूपशक्यताऽवच्छेदकभेदेऽपि धेन्वादिपदानां-

---

कतयेतिहेत्वभिधानस्यासङ्गत्यापत्तेश्च । शक्यताऽवच्छेदकभेदेनेति । अत्रावच्छेदकत्वं निरवच्छिन्नं; तदाश्रयश्च विशेषणविशेष्यताऽवच्छेदकादिभावानापन्नो ग्राह्यः, तेन पश्वादिपदानां शक्यताऽवच्छेदकस्य लोमादेः स्वर्गादिपदानां शक्यताऽवच्छेदकस्य दुःखासम्भिन्नत्वसुखत्वादेर्भेदेऽपि न क्षतिः,

अवच्छेदकपदस्यावच्छेदकतापरत्वेन लोमादौ दुःखासम्भिन्नत्वसुखत्वादौ चावच्छेदकताया ऐक्येन न क्षतिरित्यप्याहुः ।

अवच्छेद्यभेदनियतत्वादिति । अथ तादृशभेदनियतत्वं न तादृशभेदप्रयोज्यत्वं; भेदस्य नित्यत्वेन तदसम्भवाद्, नापि तादृशभेदव्याप्यत्वं-तद्, अवच्छेद्यभेदाभाववत्यवच्छेद्येऽवच्छेदकभेदस्य सत्त्वेन तद्विरहाद्, नापि तादृशभेदाभाववद्भिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नतादृशभेदाभावव्यापकभेदप्रतियोगिताऽवच्छेदकत्वं तदित्यपि सम्यक्, तथा सति हर्य्यादिपदानामपि विष्णुसिंहादिष्वेकशक्तिकत्वेऽपि तादृशव्याप्यत्वसम्भवेन तस्य शक्तिभेदासाधकतयाऽकिञ्चित्करत्वापत्तेरतो दुर्व्वचन्तदिति चेद्?

न–यतो नियतत्वं व्याप्यत्वमेव; तच्चावच्छेद्यभेदाभावव्यापकभेदप्रतियोगिताऽवच्छेदकत्वम्, अत्राभावश्च स्वप्रतियोगिनिरूपितावच्छेदकतावद्भिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः,भेदाभाववत्त्वञ्च–स्वप्रतियोगिभिन्नानुयोगिकस्वरूपसम्बन्धेन ग्राह्यं, स्वम्=अवच्छेदकभेदः, अतो न हर्य्यादिपदस्य नानाशक्यताऽवच्छेदकेष्वेकशक्यताऽवच्छेदकत्वसम्भवः, न वाऽवच्छेदकभेदे व्याप्यत्वहानिरिति,

एवञ्च यो यदवच्छेदकः स तद्भेदव्याप्यभेदप्रतियोगीति व्याप्तौ तात्पर्य्यमिति,

ननु धेन्वादिपदानां शक्यताऽवच्छेदकभेदेऽपि न शक्तिभेद इति तादृशव्याप्तौ व्यभिचार इति चेद्?

न—गोत्वविशिष्टधानकर्म्मत्वादौ शक्यताऽवच्छेदत्वकल्पनात् पूर्व्वोक्तविशेषणेन धर्त्तुमशक्यत्वाच्चेति भावः ।

न शक्तिभेदः; अवच्छेदकताया व्यासज्यवृत्तित्वात्, तथा प्रकृते चन्द्रत्वसूर्य्यत्वयोर्व्यासज्यवृत्तिशक्यताऽवच्छेदकतास्वीकारान्न शक्तिभेदः; न वैकं परित्यज्यान्यप्रतीतिः, केवलसूर्य्यत्वादिप्रकारकबोधे केवलतद्धर्म्मनिष्ठशक्यताऽवच्छेदकतापर्य्याप्त्यवगाहिज्ञानस्य हेतुत्वा-

---

नव्यास्तु–अवच्छेदकभेदसमसंख्यकावच्छेद्यभेदकत्वादिति नियतत्वादित्यन्तस्यार्थ इति प्राहुः ।

व्यासज्यवृत्तित्वादिति । एकपर्य्याप्तिसम्बन्धेनोभयादिवृत्तित्वादित्यर्थः । न शक्तिभेद इति । तथा च शक्यताऽवच्छेदकताभेदस्य शक्तिभेदनियामकत्वादिति हृदयम् ।

परित्यज्य=अविषयीकृत्य ।

ननु न वैकं परित्यज्यान्यप्रतीतिरिति न युक्तं? पुष्पवन्तपदशक्यताऽवच्छेदकत्वस्य सूर्य्यत्वचन्द्रत्वोभयपर्य्याप्तत्वेन सूर्य्यत्वेऽपि पर्य्याप्तत्वमतः पुष्पवन्तपदं सूर्य्यत्वपर्य्याप्तावच्छेदकताकशक्यताकमित्यादिशक्तिप्रमातः सूर्य्यादिपदादिव केवलसूर्य्यादिबोधस्य दुर्व्वारत्वादिति? अत आह—केवलेत्यादि ।

इतरप्रकारतायाः कार्य्यताऽवच्छेदकत्वाभावसूचनाय प्रथमकेवलपदमिति केचित्,

तन्न सम्यक्–सूर्य्यत्वपर्याप्तप्रकारताकशाब्दं प्रति सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताकशक्यताकं पदमिति ज्ञानत्वेन हेतुत्वे; यदा पुष्पवन्तपदं चन्द्रत्वसूर्य्यत्वोभयपर्य्याप्तावच्छेदकताकशक्तिमदित्यादिज्ञानाच्चन्द्रसूर्य्योभयविषयकशाब्दबोधो जायते; तत्र सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताकशक्तिज्ञानस्यासत्त्वेन तादृशशाब्दस्य कार्य्यताऽवच्छेदकाक्रान्तत्वेन च व्यभिचारापत्तेः,

यदि तु केवलेत्यनेन सूर्य्यत्वभिन्ननिष्ठप्रकारताशून्यत्वे सति सूर्य्यत्वनिष्ठप्रकारताकशाब्दं प्रति सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताकशक्तिज्ञानत्वेन हेतुत्वं कल्प्यते; तदाऽपि सूर्य्यपदं सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताकशक्यताकं; चन्द्रपदञ्च चन्द्रत्वमात्रपर्य्याप्तावच्छेदकताकशक्यताकमित्यादिज्ञानात् सूर्य्याचन्द्रमसावित्यादिवाक्यात् चन्द्रसूर्य्योभयविषयकशाब्दबोधानुपपत्तिरिति,

अत्र वदन्ति–सूर्य्यत्वनिष्ठप्रकारताभिन्नं यत् प्रकारताविशिष्टप्रकारत्वं तच्छून्यत्वे सति सूर्य्यत्वनिष्ठप्रकारताशालिशाब्दं प्रति सूर्य्य-

त्, चन्द्रसूर्य्यत्वोभयांशे शक्यताऽवच्छेदकतापर्य्याप्त्यवगाहिज्ञानस्य चोभयप्रकारकबुद्धित्वं कार्य्यताऽवच्छेदकम्; अतस्तादृशशक्तिज्ञानाच्च-

---

त्वमात्रपर्य्याप्तावच्छेदकताकशक्यताकसूर्य्यादिपदज्ञानस्य हेतुत्वम्, प्रकारतावैशिष्ट्यञ्च—स्वभिन्नत्वस्वप्रयोजकशक्तिज्ञानप्रयोज्यत्वोभयसम्बन्धेन, स्वं प्रकारत्वं, पदान्तरशक्तिज्ञानप्रयोज्यचन्द्रत्वादिप्रकारतायां स्वप्रयोजकशक्तिज्ञानप्रयोज्यत्वाभावान्नासङ्ग्रहः, एवमन्यत्राप्यूह्यम्।

केचित्तु-हेतुत्वादिति पञ्चम्यन्तान्तस्य; अत इति पञ्चम्यन्तस्य च द्वयोर्न सूर्य्यत्वावच्छिन्नान्वयबोधप्रसङ्ग इत्यनेनान्वयः, ज्ञानस्य चेत्यत्रस्थचकारस्यात इत्यनन्तरं योजनया तत् समर्थनीयं, पञ्चम्यन्तान्तस्य प्रथमस्योपादानात् पुष्पवन्तपदस्य तादृशशक्तिभ्रमेण चन्द्राद्यनुपस्थितिकालेऽपि केवलसूर्य्यस्यान्वयबोधानुभवान्नान्वयबोधप्रसङ्गइत्यंस्यासम्भवयुक्तिकत्वशङ्कानिरास इत्याहुः।

यत्तु हेतुत्वादित्यनन्तरं नाभ्रान्तानां पुष्पवन्तपदशक्तिप्रमातः केवलसूर्य्यत्वप्रकारेण बोध इति पूरणसम्बलितव्याख्यानम्,

तदसद्-उक्तप्रकारेणान्वयसम्भवे पूरणेन व्याख्यानस्यान्याय्यत्वात्।

उभयप्रकारकबुद्धित्वमिति। चन्द्रत्वप्रकारत्वे सति सूर्य्यत्वप्रकारत्वशाब्दत्वमित्यर्थः।

ननु पुष्पवन्तपदादिव घटादिपदादपि शक्तिभ्रमेण लक्षणया वा चन्द्रत्वसूर्य्यत्वोभयप्रकारकशाब्दोदयाद् व्यभिचारवारणाय तत्तत्पदशक्त्यादिज्ञानाव्यवहितोत्तरत्वस्य कार्य्यताऽवच्छेदककोटावश्यं निवेशनीयत्वेन तादृशप्रकारकत्वादेः कार्य्यताऽवच्छेदककोटौ कुतः प्रवेश इति चेद्?

मैवं—मीमांसकमते तत्तच्छब्दजन्यबोधे तत्तच्छब्दस्यापि भानाङ्गीकारेण तत्तच्छब्दविषयकतादृशशाब्दबोधं प्रति तत्तच्छब्दशक्तिज्ञानस्य हेतुतया व्यभिचारवारणसम्भवात्; लक्षणाग्रहस्याहेतुत्वाच्च,

अथ वा यत्रादौ केवलसूर्य्यत्वावच्छिन्ने पुष्पवन्तपदस्य शक्तिभ्रमः चन्द्रत्वावच्छिन्नपदार्थान्तरस्य बाधनिश्चयात्मकः; ततः पुष्पवन्तपदं चन्द्रसूर्य्योभयशक्तमिति शक्तिग्रहः चन्द्रे पदार्थान्तरसम्बन्धाभावज्ञानं भ्रम इति वाक्यविषयकस्मरणात्मकः; ततः चन्द्रे योग्यताज्ञानविरहेण केवलसूर्य्यस्य शाब्दबोधो योग्यताग्रहात्मकः; ततः चन्द्रसूर्य्योभयस्य बोधः, तत्क्षणे केवलसूर्य्यस्यापि बोधप्रसङ्गः; तादृशाब्दस्योभयशक्तिग्रहस्याव्यवहितोत्तरत्ववत्त्वेन कार्य्यताऽवच्छेदकाक्रान्तत्वाद्,

न्द्रत्वाद्यवच्छिन्नान्वयबोधौपयिकयोग्यताज्ञानाद्यसत्त्वे न सूर्य्यत्वाद्यवच्छिन्नान्वयबोधप्रसङ्गः,

नानाऽर्थपदाच्च प्रत्येकधर्म्मावच्छिन्नस्यापि प्रतीत्या तत्र प्रत्येकमेवावच्छेदकतापर्य्याप्तेरवश्योपगन्तव्यतया शक्यताऽवच्छेदकताभेदेन शक्तिभेदः,

अथावच्छेदकताग्राहकमानेन धर्म्मिनिष्ठैकविशेष्यतानिरूपितविशेषणताऽऽपन्नेष्वेव नानाधर्म्मेष्ववच्छेदकत्वपर्य्याप्तिर्गृह्यतेऽतो महानसीयो नास्ति वह्निर्नास्तीत्याकारकं महानसीयत्ववह्नित्वादिपुरस्कारेण पृथक् पृथक् प्रतियोगिविषयकं ज्ञानं महानसीयत्ववह्नित्वा-

---

योग्यताज्ञानाद्यात्मकापादकसत्त्वाच्च, चन्द्रत्वप्रकारत्वस्य सूर्य्यत्वप्रकारत्वस्य च कार्य्यताऽवच्छेदकत्वे च केवलसूर्य्यत्वप्रकारकबोधस्य पुष्पवन्तपदशक्तिग्रहकार्य्यताऽवच्छेदकशून्यत्वमेवातो नापत्तिरिति,

अत इति । तादृशधर्म्मस्य पुष्पवन्तपदशक्तिज्ञानकार्य्यताऽवच्छेदकतापर्य्याप्त्यधिकरणत्वादित्यर्थः । न सूर्य्यत्वावच्छिन्नान्वयबोधप्रसङ्ग इति । पुष्पवन्तावुष्णकिरणाविति वाक्याच्चन्द्र उष्णकिरणाभाववानिति बाधनिश्चयकाले सूर्य्य उष्णकिरण इति बोधो न भवतीत्यर्थः, शुद्धसूर्य्यत्वप्रकारकशाब्दत्वस्य तादृशशक्तिज्ञानकार्य्यताऽवच्छेदकत्वविरहादिति भावः । नानाऽर्थपदात्=हर्य्यादिपदात् , प्रत्येकमित्यस्य सप्तम्यन्तस्य विष्णुत्वसूर्य्यत्वाद्येकैकस्मिन्नित्यर्थः ।

ननु महानसीयत्ववह्नित्वादिधर्म्मद्वयादिष्वेकप्रतियोगिताऽवच्छेदकत्वं विना महानसीयवह्निर्नास्तीत्यादिप्रतीतेः प्रत्येकाभावावगाहिप्रतीतितो वैलक्षण्यं नोपपद्यते; अतो महानसीयत्ववह्नित्वादिधर्म्मद्वयादिष्वेकावच्छेदकत्वं सिध्यतु; पुष्पवन्तपदशक्यताऽवच्छेदकत्वावगाहिनी विलक्षणा प्रतीतिर्नास्त्यतः चन्द्रत्वसूर्य्यत्वधर्म्मद्वयादिष्वेकावच्छेदकत्वं कुतः सिध्येद् ? इत्याशङ्कते—अथेत्यादि ।

अवच्छेदकताग्राहकेति । अवच्छेदकतासाधकप्रत्यक्षादिनेत्यर्थः । धर्म्मिनिष्ठैकविशेष्यतेति । तथा च वह्निमति पर्व्वते वह्निशून्ये च महानसे महानसीयवह्निर्नास्तीति प्रतीतिर्जायते किन्तु महानसीयो नास्ति वह्निर्नास्तीति प्रतीतिस्तु न जायते; अत एतत्समूहालम्बनप्रतीतितः पूर्व्वप्रतीतौ वह्निनिष्ठैकविशेष्यतानिरूपितः प्रकारतारूपो विशेषः स्वीकार्य्य इति वह्निनिष्ठैकप्रतियोगिताऽवच्छेदकतापर्य्याप्त्यधिक-

दिपर्य्याप्तप्रतियोगिताऽवच्छेदकताकं विशेषाभावं नावगाहते; अपि तु शुद्धवह्नित्वावच्छिन्नाभावादिकमेवेति कथं दिवाकरनिशाकरशक्तं-पुष्पवन्तपदमित्यादिशक्तिग्रहे चन्द्रत्वसूर्य्यत्वोभयस्मिन् शक्यताऽवच्छेदकत्वपर्य्याप्तिभानं; तत्र धर्म्मिणोश्चन्द्रसूर्य्ययोर्भेदेन तन्निष्ठाविशेष्यतायाऐक्यासम्भवादिति चेद्‌ ?

न—यतो यत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्म्मान्तरधर्म्मिताऽवच्छेदकतया धर्म्मद्वयादेर्भानं; तत्र विभिन्नधर्म्मिविशेषणताऽऽपन्नेष्वपि तावद्धर्म्मेष्वेकावच्छेद्यनिरूपितावच्छेदकतापर्य्याप्तिः प्रतीयते,

कथमन्यथा घटपटौ न स्त इत्याकारकोभयत्वावच्छिन्नाभावप्रतीतौ घटपटादिरूपप्रतियोगिविषयताया भेदेऽप्यभावविषयताया ऐक्येन समूहालम्बनविलक्षणायामुभयत्वादिधर्मिताऽवच्छेदकतया भासमानघटत्वादिषु तादृशाभावप्रतियोगिताऽवच्छेदकत्वपर्य्याप्तिभानम् ?

एवञ्च दिवाकरनिशाकरयोः शक्तमेतत्पदमित्याकारकग्रहे शक्तिविषयताया ऐक्येन समूहालम्बनविलक्षण उभयत्वधर्मिताऽवच्छे-

---

रणत्वं महानसीयत्ववह्नित्वोभयस्मिंस्तत्रैव, अन्यथा वह्निमति पर्व्वतादौ तादृशप्रतीतिर्न स्यादिति भावः।

दिवाकरनिशाकरशक्तमित्यादि । अयम्भावः—अनेकधर्म्मिणोऽनेकाविशेषणकतया भानेन तादृशशक्तिज्ञानस्य समूहालम्बनतयाऽनुभूयमानत्वेन नैकशक्तिविषयकत्वसंभवः, दृष्टान्तान्तरेणोभयत्वभानाङ्गीकारेण च समूहालम्बनज्ञानात् तस्य विलक्षणत्वस्थापनेनोत्तरयति—यतो यत्रेत्यादिना । अवच्छेदकीभूतेति । प्रतियोगित्वादिसम्बन्धावच्छिन्नप्रकारताऽवच्छेदकीभूतेत्यर्थः, तादृशशक्तिज्ञानएकविशेष्यताकत्वस्वीकारे बाधकमाह—घटपटौ न स्त इति । तादृशप्रतीतावुभयत्वादिव्यासज्यवृत्तिधर्म्म एव द्वयोरेकामित्यादिरीत्या घटत्वावच्छिन्ने पटत्वावच्छिन्ने च भासमानः सन् तत्तद्धर्म्मावच्छिन्नप्रतियोगिताऽवच्छेदकतया भासतेऽतस्तादृशप्रतीतिः प्रत्येकधर्म्मावच्छिन्नप्रतियोगिताकाभावतो विलक्षणोभयाभावावगाहिनी घटत्वादिप्रत्येकधर्म्मावच्छिन्नप्रकारताकनिश्चयेन न बाध्यते; तस्माच्च घटत्वपटत्वोभयत्वादित्रितयादिधर्म्मपर्य्याप्तैकावच्छेदकतानिरूपितैकप्रतियोगितासिद्धि-

दकताऽऽपन्नचन्द्रत्वसूर्य्यत्वयोरेकशक्यताऽवच्छेदकत्वपर्य्याप्तिभानमविरुद्धमिति न दोषः

न चैवमुभयाभावप्रतियोगितायामुभयत्वस्येव प्रकृतउभयत्वस्याप्यवच्छेदककोटिप्रवेशप्रसङ्ग इति वाच्यम् ?

अभावबुद्धौ प्रतियोग्यंश उपलक्षणस्याप्रकारत्वनियमादुभयत्वस्य प्रतियोगिताऽवच्छेदकत्वध्रौव्यात् ,

शक्तिग्रहे च शक्यांश उपलक्षणस्योभयत्वस्य प्रकारत्वोपगमेन तस्य शक्यताऽनवच्छेदकत्वाद्,

अस्तु वा प्रकृत उभयत्वसहितमेव चन्द्रत्वसूर्य्यत्वोभयं शक्यताऽवच्छेदकं; द्वावित्यत्रेव पुष्पवन्तावित्यत्रापि प्रकृतिविभक्तिभ्यामु-

---

रिति भावः ।

एतच्च प्रात्यक्षिकप्रतीत्यभिप्रायेण, तादृशशाब्दे तु घटपटोभयत्वावच्छिन्ने वृत्तित्वाभावः प्रतीयते; अन्यथा स्त इत्यत्र द्विवचनानुपपत्तेः, आख्यातार्थविशेष्यबोधकपदस्यैव तत्समानवचनकत्वनियमादिति शाब्दाभिप्रायेणाप्येतत्सम्भवाच्च ।

उपलक्षणस्येति । अभावप्रतियोगिताऽवच्छेदकताऽनापन्नस्येत्यर्थः, अन्यथा महानसीयवह्निर्नास्ति विशिष्टसत्ता नास्तीत्यादिप्रतीतेरपि वन्ह्यादिसामान्याभाववगाहिताऽऽपत्तेरिति भावः ।

उपलक्षणस्य=शक्यताऽनवच्छेदकत्वनियतशक्तिनिष्ठविशेष्यताकप्रकारताऽऽश्रयस्य, शक्यताऽनवच्छेदकत्वादिति । तदादिपदानां बुद्धिस्थत्वादेरिवेति भावः ।

ननूभयत्वस्य शक्यांश उपलक्षणतया भानोपगमेन शक्तेरैक्यकल्पना यदि स्यात् तदा धेन्वादिपदानामपि गोत्वधानकर्म्मत्वादेरप्युपलक्षणतया गवादिनानाव्यक्तिषु शक्तेरैक्यं स्यात्; स्याच्च गोत्वधानकर्म्मत्वादौ शक्यताऽवच्छेदकत्ववैयर्थ्यमिति? अत आह–अस्तु वेति ।

उभयत्वसहितमिति । तथा चोभयत्वचन्द्रत्वसूर्य्यत्वैतत्त्रितयमेव पुष्पवन्तपदशक्यताऽवच्छेदकमित्यर्थः

ननूभयत्वस्यापि शक्यताऽवच्छेदकत्वे पुष्पवन्तपदेनैवोभयत्वावच्छिन्नोपस्थापनात् पुष्पवन्तावित्यत्र द्विवचनोपस्थाप्योभयत्वस्य तत्रानन्वयप्रसङ्गो निराकाङ्क्षत्वादिति ? अत आह–द्वावित्येति ।

पस्थापितस्य सकृदेव भानं; विरुद्धयोरेकावच्छेदकत्वपर्य्याप्तिरपि घटत्वपटत्वाद्योरुभयाभावप्रतियोगिताऽवच्छेदकत्वपर्य्याप्तिवत् प्रकृते न विरुध्यते,

न च घटपटौ न स्त इत्यत्रोभयत्व एव प्रतियोगिताऽवच्छेदकत्वं भासते न तु घटत्वपटत्वादाविति वाच्यम् ?

केवलोभयत्वे तादृशाभावप्रतियोगिताऽवच्छेदकतायाः पर्य्याप्तौ यत्किञ्चिदुभयवति तादृशाभावप्रतीत्यनुपपत्तेः,

न च सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वरूपावच्छेदकत्वावच्छेदकधर्म्मेण व्यावृत्तोभयत्वविशेषस्यैव तत्रावच्छेदकत्वं प्रतीयत इति वाच्यम् ?

---

सकृदेव भानमिति । न तत्र द्विवचनोपस्थाप्यद्वित्वान्वयः, अन्वयबोधानुत्पत्तेस्तत्रेष्टत्वादिति भावः ।

प्रतियोगिताऽवच्छेदकतापर्य्याप्तिवदिति । तथा च परस्परं विरुद्धेऽपि घटत्वपटत्वादिधर्म्मिताऽवच्छेकत्वं प्रतीतिबलात् स्वीकरणीयम् ,

स्वीकार्यञ्चोभयत्वादिसहितविरुद्धघटत्वपटत्वादावेकप्रतियोगिताऽवच्छेदकतापर्याप्त्यधिकरणत्वम्; अन्यथा तादृशप्रतीतेर्विलक्षणाभावविषयकत्वानुपपत्तिः स्यादिति भावः ।

ननु यदि घटपटौ न स्त इति दृष्टान्तप्रतीतौ घटत्वपटत्वोभयत्वैतत्त्रितयपर्याप्तैकावच्छेदकताकप्रतियोगित्वं भासेत तदा पुष्पवन्तपदं चन्द्रसूर्योभयशक्तमिति प्रतीत्याऽपि चन्द्रत्वसूर्यत्वोभयत्वैतत्त्रितयधर्म्मपर्याप्तावच्छेदकताकशक्तिः सिध्येत् तथैव न ? इत्याशङ्कते—न चेत्यादि।

केवलोभयत्व इति । उभयत्वत्वेनोभयत्वमात्र इत्यर्थः, यत्किञ्चिदुभयवतीति । दण्डमठोभयादिप्रकारकनिश्चयसत्त्व इत्यर्थः, तादृशधर्मपर्याप्तावच्छेदकताकप्रतियोगितासम्बन्धेन तादृशधर्म्मावच्छिन्नप्रकारताकाभावबुद्धिं प्रति तादृशधर्म्मावच्छिन्नप्रकारकनिश्चयत्वेन प्रतिबन्धकत्व कल्पनेन मठदण्डोभयवदिति निश्चये सामान्यत उभयत्वत्वावच्छिन्नप्रकारताकनिश्चयसत्वाद् घटपटौ न स्त इति प्रतीतिर्न भवितुमर्हतीति भावः ।

सामानाधिकरण्येति । सामानाधिकरण्यसम्बन्धेन पटत्वनिष्ठावच्छेदकतानिरूपिका सती तादृशसम्बन्धेन घटत्वनिष्ठावच्छेदकतानिरूपिका योभयत्वनिष्ठावच्छेदकता तन्निरूपकप्रतियोगिताकाभाव एव

तेन तेन प्रकारेण तत्रोभयत्वस्याभानात्तत्तद्रूपाणां तत्तद्धर्म्मि-विशेषणतयैव भानादतिप्रसक्तधर्म्मप्रकारेण भासमाने चावच्छेदकतापर्य्याप्तिभानानुपगमात् तत्रोभयत्वविशेषेऽभावप्रतियोगिताऽव-

---

तादृशप्रतीतेर्व्विषयः ।

एवञ्च तादृशविशेषणविशेष्यताऽऽपन्नोभयत्वस्यैवावच्छेदकत्वभानाद् विलक्षणाभावावगाहनमिति हृदयम् ।

तेनेति । सामानाधिकरण्यसम्बन्धेन घटत्वेन पटत्वेन च, तत्र=तादृशप्रतीतौ, अभानाद्=अविषयत्वात्, तत्तद्रूपाणां=घटत्वपटत्वादीनां, धर्म्मिविशेषणतया=घटादिविशेषणतया, एवकारेणोभयत्वादिविशेषणतया भानव्यवच्छेदः, अतिप्रसक्तधर्मप्रकारेण=उभयत्वान्तरसाधारणोभयत्वत्वप्रकारेण । भासमान इति । घटपटादिवृत्तित्वविशेष इति हृदयम् । तत्र=तादृशप्रतीतौ, उभयत्वविशेष इति । सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वविशिष्ट इत्यर्थः ।

अयम्भावः—यत्र ज्ञाने यद्यद्धर्म्मविशिष्ट उभयत्वादिकं भासते तत्र तत्तद्धर्म्मसामानाधिकरण्येनाप्युभयत्वादिकं भासत इति नियमेनोक्तशक्त्यादिग्रहे घटत्वपटत्वादिसमानाधिकरणतयाऽप्युभयत्वादेर्भानं भवत्येव,

एवञ्च घटपटौ न स्त इत्यादिवाक्यज्ञानस्य हि सामानाधिकरण्यसम्बन्धावच्छिन्नघटत्वपटत्वनिष्ठावच्छेदकताकोभयत्वत्वावच्छिन्नावच्छेदकताकप्रतियोगितासम्बन्धावच्छिन्ना या घटत्वावच्छिन्नविशेष्यताकपटत्वावच्छिन्नविशेष्यताकोभयत्वत्वावच्छिन्नप्रकारत्वावच्छिन्नघटत्वपटत्वोभयत्वैतत्त्रितयधर्म्मपर्य्याप्तावच्छेदकताकप्रकारता तन्निरूपिताभावत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति हेतुतायाः कल्पनीयतया तादृशोभयत्वविशेषे प्रतियोगिताऽवच्छेदकत्वादिसम्भवः,

ननु नञर्थाभावे यत्सम्बन्धेन यादृशधर्म्मविशिष्टस्य विशेषणतया भानं तादृशसम्बन्धावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकप्रतियोगिताया एव तत्संसर्गतया भाननियमः;

अन्यथा घटो नास्तीत्यादिप्रतीतेर्व्विषयित्वसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियोगितासम्बन्धेन तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन चाभावादौ घटादेर्भानापत्त्या घटवत्यपि तादृशप्रतीत्यापत्तेः,

एवञ्च घटपटौ न स्त इत्यादिप्रतीतौ घटत्वादेः समवायेन घटाद्यंशे भानेन समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताया एव सं-

च्छेदकत्वपर्य्याप्त्युपगमेऽत्राप्युभयत्वाविशेषे शक्यताऽवच्छेदकत्वप-र्य्याप्तिसम्भवाच्चन्द्रत्वसूर्य्यत्वयोरवच्छेदकताऽवच्छेदकतयैव शाब्दबोधे भानोपपत्तिः,

न च शक्यताऽवच्छेदकताऽवच्छेदकमवच्छेदकविशेषणतयैव भा-सत इति चन्द्रत्वसूर्य्यत्वयोस्तथात्वे चन्द्रसूर्य्यांशे प्रकारतया शाब्द-बोधे भानानुपपत्तिरिति वाच्यम् ?

तयोरवच्छेदकताऽवच्छेदकत्वेऽपि शक्तिग्रहेऽवच्छेदकाश्रयचन्द्र-

---

सर्गत्वमावश्यकमिति चेद् ?

न-यत्रोभयत्वादेर्धर्म्मिताऽवच्छेदकतया घटत्वादेर्भानं तत्र घटत्वपट-त्वादिसामानाधिकरण्येनोभयत्वादेः पारतन्त्र्येण भानोपगमादुक्तप्रति-योगितायाः संसर्गत्वसम्भवादाकाङ्क्षाज्ञानस्य कारणताया विशेषतो-विश्रमाच्च,

अवच्छेदकताऽवच्छेदकतयैवेति। शक्यताऽवच्छेदकताऽवच्छेदतयैवेत्यर्थः।

शक्तिज्ञानन्तु चन्द्रत्वसूर्यत्वावच्छिन्नोभयत्वनिष्ठावच्छेदकताकस्व-निरूपितशक्तिसम्बन्धेन चन्द्रसूर्योभयवत् पुष्पवन्तपदमित्याद्याकार-कमिति ध्येयम्,

ननु पशुपदादिजन्यबोधे शक्यताऽवच्छेदकताऽवच्छेदकस्य ला-ङ्गूलत्वादेर्यथा शक्यविशेषणलाङ्गूलादिविशेषणतया भानं; तथा पु-ष्पवन्तपदजन्यबोधेऽपि शक्यताऽवच्छेदकताऽवच्छेदकचन्द्रत्वादेः श-क्यविशेषणोभयत्वादिविशेषणतया भानं स्याद् ? इत्याशङ्कते-न चेत्यादि।

तयोरिति । चन्द्रत्वसूर्यत्वावच्छिन्नोभयत्वनिष्ठावच्छेदकताकस्वनि-रूपितशक्तिसम्बन्धेन चन्द्रसूर्योभयप्रकारकज्ञानस्य हेतुतया तादृश-ज्ञाने चन्द्रत्वेन चन्द्रस्य सूर्यत्वेन सूर्यस्य च भानेन तज्जन्योपस्थिते-रपि तादृशचन्द्रसूर्यविषयतया शाब्दबोधोऽपि तादृशो युज्यत-इति हृदयम्,

नन्ववच्छेद्यग्रहे स्वातन्त्र्येणावच्छेद्याश्रये यस्य भानं तत्रावच्छे-द्यावच्छेदकत्वं तत्र यो विशेषणतया भासते तत्रावच्छेद्यावच्छेद-कताऽवच्छेदकत्वं न तु पारतन्त्र्येण भासमानेऽवच्छेद्यावच्छेदकत्वमि-ति नियमः, रजतत्वेन रङ्गस्य ज्ञानं नास्तीत्यादिप्रतीतौ तु तृतीयाऽन्ता-र्थस्य रजतत्वप्रकारत्वस्य निरूपितत्वसम्बन्धेन षष्ठ्यन्तार्थरङ्गविशेष्य-त्वेऽन्वयाद् रजतत्वप्रकारत्वानिष्ठावच्छेदकतानिरूपकरङ्गविशेष्यत्वनि-

सूर्यविशेषणतयैव भानात् शाब्दबोधेऽपि तद्विशेषणतया भान-सम्भवात् ,

अथ शक्तिग्रहे साक्षात् शक्यताऽनवच्छेदकस्य तदुभयस्य श-क्यचन्द्रसूर्य्योभयांशे साक्षात्प्रकारतया भानं न सम्भवतीति चेद् ?

घटपटौ न स्त इत्यादौ घटत्वपटत्वयोः साक्षात् प्रतियोगिता-ऽवच्छेदकत्वमन्तरेण प्रतियोगिविशेषणतया भानासम्भवस्तुल्य एवे-त्याहुः ।

ज्ञानशक्तिवादिनस्तु—चन्द्रत्वसूर्य्यत्वोभयप्रकारकज्ञानमेव पुष्प-वन्तपदशक्यं पुष्पवन्तपदमुभयप्रकारकज्ञाने शक्तमित्याकारकश-क्तिग्रहस्य तादृशज्ञानत्वमेव कार्यताऽवच्छेदकमिति व्युत्पत्तिमतः पुरु-षस्य नैकैकबोधापत्तिरतोऽतादृशस्य भवत्येव तादृशबोधः,

न चैवमपि पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञाने शक्तमित्यादिबो-धस्य प्रमात्वात् शक्तिभ्रमं विना प्रत्येकशाब्दबोधानुदय इति कथ-मुपपद्यत इति वाच्यम् ?

---

छ्यावच्छेदकताकज्ञानत्वावच्छिन्नप्रतियोगिताकाभाव एव भासते,

एवञ्च रङ्गरजते इति समूहालम्बनज्ञानकाले तादृशप्रतीतिरुपपन्ना, एवञ्च पुष्पवन्तपदं चन्द्रसूर्यशक्तमित्यादिप्रतीत्या शक्यंशे विशेषण-तया भासमाने चन्द्रे सूर्ये च साक्षाद् विशेषणयोः चन्द्रत्वसूर्यत्व-योः शक्यताऽवच्छेदकत्वमेव न तु शक्यत्वाद्यवच्छेदकताऽवच्छेदक-त्वं सिध्यतीत्याह—अथ शक्तीति ।

तुल्य एवेति । तथा च यत् साक्षादवच्छेदकं तदवच्छेद्याश्रये सा-क्षाद्विशेषणतया भासत इति नियमो न प्रामाणिकः; प्रामाणिकत्वे विरुद्धयोरपि घटत्वपटत्वयोः प्रतियोगितानिरूपितैकावच्छेदकत्वपर्य्या-प्तिर्भवताऽपि स्वीकार्य्यैति भावः ।

ज्ञानशक्तिवादिनां मतमाह—ज्ञानशक्तीति । चन्द्रत्वसूर्यत्वोभयप्रकारेति । चन्द्रत्वप्रकारकत्वे सति सूर्यत्वप्रकारकं ज्ञानमित्यर्थः, तथा च चन्द्र-त्वाद्यंश उभयत्वाभानेऽपि न क्षतिः ।

पुष्पवन्तपदशक्यमिति । पुष्पवन्तपदनिष्ठशक्तिनिरूपितजन्यतावदि-त्यर्थः । शक्तमिति । तादृशज्ञानजनकशक्तिमदित्यर्थः । तादृशज्ञानत्वमिति । चन्द्रत्वप्रकारकं सत् सूर्य्यत्वप्रकारकं यत्तादृशज्ञानत्वमित्यर्थः, तथा च

केवलचन्द्रत्वप्रकारकबोधे तत्तत्प्रकारकबोधत्वांशे शक्तिनिरूपकताऽवच्छेदकताऽवच्छेदकतापर्याप्तिग्रहस्य हेतुत्वात्,

प्रकृत उभयप्रकारकबोधत्वाद्यंशे शक्तिनिरूपकताऽवच्छेदकत्वपर्याप्त्यभ्युपगमात् तादृशस्य चन्द्रत्वप्रकारकज्ञाने शक्तामित्यादिबोधस्य भ्रमत्वनियमादित्याहुः।

ईश्वरेच्छारूपस्य सङ्केतस्य शक्तित्वमङ्गीकर्तृसिद्धान्तिपक्षे पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकशाब्दबोधो भवत्वित्याकारक एव तादृशपदे भगवत्सङ्केतः केवलचन्द्रत्वावच्छिन्नविषयकबोधश्च न तत्पदजन्यत्वेन तद्विषय इति तादृशपदान्न तथाविधबोधः,

न च तादृशपदजन्यत्वेन केवलचन्द्रत्वावच्छिन्नविषयकबोधस्य सङ्केताविषयत्वेऽपि चन्द्रत्वाद्यवच्छिन्नाविषयकबोधविषयकत्वेन सङ्केतविषयकग्रहस्य चन्द्रत्वादिप्रकारकबोधजनकस्य सूर्यत्वाद्यवच्छिन्नविषयकबोधाविषयकत्वेन संकेतग्रहघटितसूर्यत्वाद्यवच्छिन्नविषयकबो-

---

तादृशधर्मत्रयमेव शक्यताऽवच्छेदकं शक्तिनिरूपितजन्यताऽवच्छेदकमिति तु यावद्, इति व्युत्पत्तिमतः=इति शक्तिग्रहवतः, शक्तिनिरूपकता=शक्त्यवच्छिन्नजनकतानिरूपकता, अन्यच्च सुगमम्।

न्यायमतमुत्थापयति—ईश्वरेति। पक्षे=मत इत्यर्थः, चन्द्रत्वावच्छिन्नविषयताशालीति चन्द्रत्वप्रकारताशालीति वा तदर्थः, न तथाविधबोध इति। अत्र शक्तिप्रमात इति पूरणीयम्।

चन्द्रत्वादिप्रकारकबोधजनकस्येति। पुष्पवन्तपदाच् चन्द्रत्वावच्छिन्नविषयकबोधो भवत्वित्याद्याधुनिकसङ्केतजन्यस्य तादृशशक्तिभ्रमजन्यस्य वा केवलचन्द्रत्वादिप्रकारकशाब्दबोधस्यानुरोधेन चन्द्रत्वप्रकारकशाब्दं प्रति पुष्पवन्तपदजन्यत्वप्रकारतानिरूपितचन्द्रत्वावच्छिन्नविशेष्यताशालिसङ्केतग्रहो हेतुर्वाच्यः, तथा च तादृशशक्तिग्रहात् सूर्य्यत्वप्रकारकशाब्दसामग्रीं विनाऽपि चन्द्रत्वप्रकारकशाब्दबोधजननादिति भावः,

एतेन पुष्पवन्तपदघटितसामग्रीतः केवलचन्द्रादिविषयकबोधस्य कुत्राप्यजननात् तादृशसामग्र्याः केवलचन्द्रादिविषयकबोधस्यापाद-

धसामग्र्यामसत्यामपि सम्भवेन तद्बलादभ्रान्तस्य केवलचन्द्रत्वाव-
च्छिन्नविषयकबोधो दुर्व्वार एवेति वाच्यम् ?

तत्पदजन्यकेवलचन्द्रत्वादिप्रकारकबोधे तत्पदजन्यकेवलचन्द्र-
त्वावच्छिन्नविषयकबोधत्वपर्य्याप्तविषयताऽवच्छेदकताकत्वप्रकारकस-
ङ्केतविषयकज्ञानस्य हेतुत्वात्,

पुष्पवन्तपदजन्यबोधत्वघटितभगवत्संकेतविषयताऽवच्छेदकश-
रीरे च सूर्य्यत्वावच्छिन्नविषयकत्वचन्द्रत्वावच्छिन्नविषयकत्वयोरेक-
त्र निवेशात् तत्पदजन्यप्रत्येकधर्म्मावच्छिन्नविषयकबोधत्वे संकेतवि-
षयताऽवच्छेदकत्वपर्य्याप्तिविरहात् तदंशे तत्पर्य्याप्त्यवगाही ग्रहो-
भ्रम एवेति न शक्तिप्रमातः प्रत्येकधर्म्मप्रकारकबोधापत्तिः,

---

कत्वासम्भवात् केवलचन्द्रत्वावच्छिन्नविषयकबोधो दुर्व्वार एवेत्य-
स्यासङ्गतिरित्यपि निरस्तम्,

तादृशाधुनिकसङ्केतग्रहादिसत्त्वे केवलचन्द्रादिविषयकबोधस्योत्प-
त्त्या पुष्पवन्तपदघटितवाक्यज्ञानस्य कारणत्वस्यावश्यकत्वेन तद्घटित-
सामग्र्याः कुत्र चित् केवलचन्द्रादिविषयकबोधोत्पत्त्या आपादकत्व-
सम्भवात्,

केवलचन्द्रत्वादिप्रकारकशाब्दबोधतज्जनकशक्तिग्रहयोः चन्द्रत्वाव-
च्छिन्नविषयकसूर्य्यत्वावच्छिन्नविषयकशाब्दबोधतज्जनकशक्तिग्रहयो-
श्च कार्य्यकारणभावावच्छेदकवैलक्षण्यप्रदर्शनेन समाधत्ते—तत्पदजन्ये-
ति । पुष्पवन्तपदजन्येत्यर्थः, केवलचन्द्रत्वादिप्रकारकशाब्दत्वञ्च का-
र्य्यताऽवच्छेदकं पूर्व्वं निरुक्तं, तत्पदजन्यकेवलचन्द्रत्वावच्छिन्नेत्यादिना
कारणताऽवच्छेदकमुक्तं, तच्च पुष्पवन्तपदजन्यत्वप्रकारतानिरूपिता या
चन्द्रत्वावच्छिन्नविषयकत्वनिष्ठावच्छेदकताभिन्ना सती शाब्दत्वनिष्ठा-
वच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका तादृशधर्म्मद्वयाव-
च्छिन्ना विशेष्यता तच्छालिसङ्केतग्रहत्वं—

तादृशसङ्केतश्च पुष्पवन्तपदजन्यः चन्द्रत्वावच्छिन्नविषयकशाब्द-
बोधो भवत्वित्याकारकः,

द्वितीयकारणताऽवच्छेदकञ्च पुष्पवन्तपदजन्यत्वप्रकारतानिरूपिता
या चन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वावच्छिन्नविषयकत्वशाब्दत्वैतत्-
त्रितयधर्म्मावच्छिन्नविशेष्यता तच्छालिसङ्केतग्रहत्वम्,

तत्पदजन्यचन्द्रत्वावच्छिन्नविषयकसूर्य्यत्वावच्छिन्नविषयकबोधत्वपर्याप्तविषयताऽवच्छेदकताकत्वप्रकारकशक्तिग्रहस्य चोभयधर्म्मप्रकारकबुद्धित्वमेव कार्य्यताऽवच्छेदकमतो न तद्घटितसामग्रीबलादेकधर्म्मावच्छिन्नान्वयबोधस्य यत्किञ्चित्कारणविरहदशायामपरधर्म्मप्रकारकशाब्दबोधापत्तिः,

---

अथ कीदृशं सङ्केतज्ञानमत्र कारणम् ? न तावच्चन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वावच्छिन्नविषयकत्वशाब्दत्वैतद्धर्म्मत्रयावच्छिन्नभगवत्संकेतीयविशेष्यतानिरूपितजन्यत्वप्रकारतानिरूपितपुष्पवन्तपदत्वावच्छिन्नावच्छेदकतावत् पुष्पवन्तपदमित्याकारकम्,

ताद्दशज्ञानस्य पदपदार्थयोः सम्बन्धानवगाहनेनार्थस्मरणानुपपत्तेः,

नापि स्वनिष्ठं यत् पुष्पवन्तपदत्वावच्छिन्नावच्छेदकत्वं तन्निरूपितजन्यत्वप्रकारताकताद्दशधर्म्मत्रयावच्छिन्नभगवत्सङ्केतीयविशेष्यतानिरूपितावच्छेदकताऽऽश्रयविषयत्वसम्बन्धेन पुष्पवन्तपदप्रकारकचन्द्रसूर्य्यविशेष्यकज्ञानम्,

अत्र स्वपदं पुष्पवन्तपदपरं परिचायकं, ताद्दशज्ञानस्य चन्द्रः सूर्य्यश्च पुष्पवन्तपदवानित्याकारकतया समूहालम्बनपर्य्यवसन्नत्वेनैकशक्तिविषयकत्वानुपपत्तेः,

न च द्वयोरेकमिति रीत्योक्तसम्बन्धेन पुष्पवन्तपदप्रकारकचन्द्रसूर्य्यविशेष्यकज्ञानस्य समूहालम्बनविलक्षणतयैकशक्त्यवगाहित्वेन नियतचन्द्रसूर्य्योभयविशेष्यकबोधजनकत्वोपपत्तिरित्यपि न सद्,

यस्माद् विरुद्धधर्म्मद्वयं धर्म्मिताऽवच्छेदकीकृत्य व्यासज्यवृत्तिधर्म्मप्रकारकमेव समूहालम्बनविलक्षणं स्वीक्रियते न त्वव्यासज्यवृत्तिधर्म्मप्रकारकम्;

अन्यथा विरुद्धघटत्वपटत्वादिकं धर्म्मिताऽवच्छेदकीकृत्य द्रव्यत्वादिकं धर्म्मिताऽवच्छेदकीकृत्य द्रव्यत्वादेर्भानापत्त्या द्रव्यघटपटवद् भूतलमित्याकारकस्य द्रव्यत्वादिधर्म्मत्रयावच्छिन्नप्रकारताकं समूहालम्बनानात्मकं ज्ञानं स्यात्,

स्याच्च द्रव्यत्वघटत्वपटत्वादित्रितयधर्म्मावच्छिन्नप्रतियोगिताकोऽतिरिक्तोऽभाव इति चेद् ?

उच्यते—स्वनिष्ठविषयत्वानिष्ठावच्छेदकतानिरूपिका या चन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वावच्छिन्नविषयकत्वशाब्दत्वैतद्धर्म्मत्रयावच्छि-

उभयविषयकत्वावच्छिन्नाया बोधनिष्ठसंकेतविषयताया ऐक्यात् शक्तेरैक्यमिति न तत्पदस्य नानाऽर्थतेति रमणीयः समाधिः,

"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यमरकोष उक्तिपदं शक्तिपरं पुष्पवन्तपदं तत्प्रतिपाद्यपरं, तथा च सूर्य्याचन्द्रमसावेकशक्त्या पुष्पवन्तपदप्रतिपाद्यावित्यर्थः,

उद्देश्यताऽवच्छेदकावच्छेदेन विधेयान्वये तात्पर्य्याच्चन्द्रत्वसूर्य्यत्वयोरेकशक्त्यधीनप्रतिपत्तिविषयताऽवच्छेदकत्वलाभो नातस्तस्माद्

---

न्नभगवदिच्छीयविशेष्यता तन्निरूपितजन्यत्वप्रकारतानिरूपितपुष्पवन्तपदत्वावच्छिन्नावच्छेदकतावत्त्वसम्बन्धेन चन्द्रसूर्य्यवत् पुष्पवन्तपदमित्याकारकमेव सङ्केतज्ञानं हेतुः, अत्र स्वपदं चन्द्रादिपरम्,

अत्रैकत्र द्वयमिति रीत्या चन्द्रसूर्य्योभयस्य तादृशपदे प्रकारतया युगपज्ज्ञानेन न समूहालम्बनत्वम्; अत एतज्ज्ञानस्यैकशक्तिविषयत्वं नानुपपन्नमित्यलं विस्तरेण,

शक्तिग्राहककोषस्यापि पुष्पवन्तपदस्योभयस्मिन्नेकशक्तिकत्वपरत्वमुपपादयति—उक्तिपदमिति ।

तदुत्तरतृतीयायाः प्रयोज्यत्वमर्थः; तस्य च पुष्पवन्तपदार्थतत्पदप्रतिपाद्यघटकप्रतिपत्तावन्वयः, सूर्य्याचन्द्रमसेति । चन्द्रसूर्य्यौ पुष्पवन्तपदजन्यैकशक्तिप्रयोज्यप्रतिपत्तिविषयतावन्ताविति तदर्थः,

नन्वेतावताऽपि चन्द्रसूर्य्यनिष्ठकथञ्चिदनुगतैकधर्मावच्छिन्नशक्तिस्वीकारेण तादृशधर्म्मप्रकारेण तयोः प्रतिपत्तिसम्भवेन न चन्द्रत्वादिप्रत्येकधर्म्मावच्छिन्न एकशक्तिसिद्धिः ? इत्यत आह-उद्देश्यताऽवच्छेदकावच्छेदेनेति ।

अयमाशयः—वाक्यं हि द्विविधम्-एकम् उद्देश्यताऽवच्छेदकसामानाधिकरण्येन विधेयान्वयपरं-

द्वितीयम् उद्देश्यताऽवच्छेदकावच्छेदेन विधेयान्वयपरम्,

आद्यं यथा—नीरूपस्पर्शवन्मनः; अस्य च रूपशून्यस्पर्शवद् यत् तद् मनः मनःपदार्थ इत्यर्थः, अस्य च रूपशून्यत्वविशिष्टस्पर्शवत्त्वसामानाधिकरण्येन मनःपदशक्यत्वान्वये तात्पर्यं मनस्त्वजातेरेव शक्यताऽवच्छेदकत्वाद्,

एवं गौरिव गवय इत्यतिदेशवाक्यस्यापि,

द्वितीयं यथा-शङ्खो लक्ष्मीपतेः पाञ्चजन्य इत्यादि; अस्य च विष्णोः शङ्खः पाञ्चजन्यपदशक्य इत्यर्थः, तात्पर्य्यमस्य विष्णुसम्बन्धिशङ्ख-

नानाऽर्थादिव तादृश एकधर्म्मावच्छिन्नविषयकबोधो; नानाऽर्थे शक्ति-भेदेन विशेषादिति लभ्यते,

अथ वैकयोक्त्या=एकोच्चारणेन सूर्य्याचन्द्रमसौ पुष्पवन्तपदप्रतिपाद्यावित्यर्थः,

तथा च यथा नानाऽर्थस्थले नावृत्तिमन्तरेण नानाऽर्थबोधस्तथा न प्रकृते; अत्र शक्तेरैक्येन सकृदुच्चरितात् सकृदर्थप्रत्यय एवेत्यस्याविषयत्वादिति भावः ।

---

त्वावच्छेदेन तस्यैव शक्यताऽवच्छेदकत्वाद्,

एवञ्च पुष्पवन्तपदस्यैकशक्तिज्ञानजन्यत्वस्य चन्द्रत्वावच्छिन्नविषयकसूर्य्यत्वावच्छिन्नविषयकप्रतिपत्तौ लाभः,

ननु दिवाकरनिशाकरावित्यत्रोभयत्वस्याप्युद्देश्यताऽवच्छेदकत्वेनैकशक्त्यधीनप्रतिपत्तिविषयताऽवच्छेदकतालाभोऽपि स्यात् पुष्पवन्तपदजन्यबोधे तादृशोभयत्वस्याभानादिष्टापत्तेरयोगादिति चेद् ?

न-तादृशोभयत्वस्य धर्म्यंश उपलक्षणतया भानस्वीकारेणात्र विधेयताऽवच्छेदकत्वालाभात् स्वरूपसम्बन्धरूपावच्छेदकत्वस्यैकदेशेऽपि स्वीकाराच्चेति भावः,

एकयेत्यत्रैकत्वं सजातीयद्वितीयराहित्यं न तु संख्याधीविशेषविषयत्वं, तच्च पुष्पवन्तपदजन्यप्रतिपत्तिप्रयोजकशक्तिनिष्ठभेदाप्रतियोगित्वम्,

एवञ्च पुष्पवन्तपदस्य नानाशक्तिमत्त्वेऽपि नैकयोक्त्येत्यस्य बाध इति निरस्तम् ।

मिश्रमतानुसारेणाह—अथ वेति ।

यत्तु पूर्व्वकल्प उक्तिपदस्य शक्तिपरत्वे लक्षणाऽऽपत्तिरित्यत आह-अथ वेति; इति भाववर्णनं तत्तुच्छं-यतो गां वक्तीत्यादिना पूर्व्वोक्तेन भट्टाचार्य्येणैव वच्यादिधातोः शक्तौ शक्तिर्निरूढलक्षणा वा स्वीकृता, नावृत्तिमन्तरेणेति । तथा च हरिर्गच्छतीति सकृदुच्चरितात् सिंहसूर्य्यादेरेकतरस्यैव बोधो न तु सूर्य्यो गच्छति सिंहो गच्छतीत्यादिनानाविधबोधः,

अत्र कल्पेऽनास्थासूचनाय वाकारः, एकोच्चारितादप्युभयबोधस्य मणिकारादिसम्मतत्वाद्, अत एव तात्पर्य्यसत्त्वे सकृदुच्चरितादपि शब्दादुभयबोधस्येष्टत्वादिति मणिकारेणोक्तम् ।

इति पुष्पवन्तपदटीका ।

पुष्पवन्तपदवत् सर्वनामपदानामपि शक्तेरैक्यान्न नानाऽर्थता,

अथ सर्व्वनामपदेन विशिष्य घटत्वपटत्वादिनैव बुद्धिस्था घटपटादयः प्रत्याय्यन्ते न तु बुद्धिस्थत्वेन; अत्र घटोऽस्ति तमानयेत्यादिवाक्यजघटकर्म्मकानयनादिबोधानन्तरं विशिष्यानयनं घटकर्म्मकं न वेति संशयानुत्पादस्य सर्वानुभवसिद्धतया दुरपन्हवत्त्वात्,

तथा च वक्तृबुद्धिस्थत्वं न सर्व्वनामशक्यताऽवच्छेदकम्; अपि तु घटत्वपटत्वाद्येव तादृशनानाधर्म्मावच्छिन्नेषु पुष्पवन्तादिपदवन्नैकशक्तिसम्भव एकैकधर्म्ममात्रप्रकारकतत्तदर्थबोधानुपपत्तेरिति सर्वनाम्नो नानाऽर्थत्वं दुर्व्वारमेव,

न वा नानाऽर्थतोपगमेऽपि निर्व्वाहः, यद्रूपावच्छिन्नविषयकव्य-

---

सर्व्वनाम्नां शक्तिं परीक्षितुकाम आदौ सिद्धान्ताप्रदर्शन आशङ्कैव नोदेत्यतस्तत्सिद्धान्तमाह-पुष्पवन्तपदवदिति ।

सर्व्वनामपदानां=तदेतदिदमादिपदानां, नानाऽर्थतेति । पृथक् पृथक्शक्त्या पृथक् पृथगर्थप्रतिपादकतेत्यर्थः ।

परीक्षामारभते-अथेत्यादि । बुद्धिस्थाः=पूर्व्वबुद्धिविषयाः, बुद्धिस्थत्वेन=बुद्धिस्थत्वप्रकारेण,

ननु तदादिपदजन्यबोधे घटत्वादेरेव प्रकारत्वं न तु बुद्धिस्थत्वस्येति कुतोऽवधार्य्यते? इत्यतआह-अत्र घट इति ।

संशयानुत्पादस्येति । तमानयेति वाक्याद् यदि बुद्धिस्थकर्म्मकमानयनमिति बोधो जायते तदाऽऽनयनं घटकर्म्मकत्वाभाववदिति बुद्धेर्ग्राह्यताऽवच्छेदकबुद्धिस्थत्वेन ग्राह्यघटादेरभावानवगाहितया तादृशनिश्चयाप्रतिबध्यत्वेन तादृशसंशयोत्पत्तिः कुतो न स्यादिति भावः,

तथा चेति । बुद्धिस्थत्वस्य तादृशबोधे भाने चेत्यर्थः, बुद्धिस्थत्वमिति । तत्पदजन्यबोधप्रकारस्यैव तत्पदशक्यताऽवच्छेदकत्वादिति भावः,

नैकशक्तिसम्भव इति । सकृदुच्चरितपुष्पवन्तपदाद् यथा चन्द्रसूर्य्योभयविषयकबोधः तथा न तदादिपदाद् अपि तु पृथक् पृथगुच्चरिततदादिपदात् प्रत्येकघटत्वपटत्वाद्यवच्छिन्नस्य बोध इष्यत एकशक्तिकत्वस्य वक्तुमशक्यत्वादिति हृदयम्,

ननु तदादिपदानां नानाऽर्थत्वैवाभ्युपेया क्षतिविरहाद्? इत्यत आह-न वेति । यद्रूपावच्छिन्नेति । यद्धर्म्मावच्छिन्ने यत्पदस्य वृद्धव्यवहारो-

वहारजनकत्वं येन पुंसा तदादिपदे न गृहीतं तदवच्छिन्ने तेन त-च्छक्त्यग्रहेण प्रक्रान्तस्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिपदज-न्यबोधविषयताऽनुपपत्तेः,

न च बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनामेवानुगमकं तथा च बुद्धिप्रकारवांस्तत्पदशक्य इत्याकारक एव शक्तिग्रहः; स च तद्धर्म्म-प्रकारेण सकलतद्धर्म्माविषयक एव सामान्यप्रत्यासत्त्या सम्भवतीति नापूर्व्वप्रकारेण बोधानुपपत्तिः;

सामान्यलक्षणाऽनभ्युपगमे तु शक्तिग्रहविशेष्यताऽवच्छेदकप्रका-

---

येन पुंसा दृश्यते तद्धर्म्मावच्छिन्ने तत्पदस्य तेन पुरुषेण शक्तिरवग-म्यते; अनन्तरं तत्पदस्य तद्धर्म्मावच्छिन्ने शक्तिसम्बन्धग्रहेण तत्पदा-र्थः स्मर्य्यते; प्रतिपद्यते च तेन पुंसा तदर्थः,

एवञ्च यद्धर्म्मावच्छिन्ने येन यत्पदव्यवहारो न दृष्टस्तदवच्छिन्ने यत्पदस्य तस्य शक्तिग्रहो नाभूत् कुतस्तद्धर्म्मावच्छिन्नाभिप्रायेण प्रयु-क्ताद् देवदत्तो गच्छति तं पश्येत्यादौ तच्छब्दात् तस्य पुंसः तादृशदे-वदत्तप्रतिपत्तिः ? शक्त्यग्रहेण तद्धर्म्मावच्छिन्नानुपस्थितेरिति भावः,

प्रक्रान्तस्यापि=वक्तृबुद्धिस्थस्यापि, बुद्धिप्रकारत्वरूपानुगतधर्म्मेणा-पूर्व्वचैत्रत्वादेरपि शक्तिग्रहाविषयत्वमुपपाद्य शाब्दबोधोपपादनमाश-ङ्कते—न चेति ।

शक्तिग्रह इति । वृद्धव्यवहारादिना जायत इति शेषः, स च तादृश-शक्तिग्रहः सम्भवतीत्यनेनान्वितः, तद्धर्म्मप्रकारेण=बुद्धिप्रकारत्वरूप-धर्म्मप्रकारेणेत्यर्थः, सामान्यप्रत्यासत्त्या=सामान्यलक्षणारूपप्रत्यास-त्त्या, तथा च घटोऽस्ति तमानय पटोऽस्ति तमपसारयेत्यादिवक्तृबु-द्धिस्थपरतत्पदघटितनानावृद्धव्यवहारतः सविधस्थस्य सामान्यतः पूर्व्वबुद्धिप्रकारत्वेन घटत्वपटत्वादिकं विषयीकृत्य बुद्धिप्रकारवान् त-त्पदशक्य इति ग्रहो भवति, ततश्च तादृशप्रकारत्वज्ञानं सामान्यप्र-त्यासत्तिः निखिलबुद्धिप्रकारत्वाश्रयघटत्वचैत्रत्वमैत्रत्वादिकं ग्राहयति; ततश्च बुद्धिप्रकारत्वेन निखिलघटत्वचैत्रत्वमैत्रत्वाद्यवच्छिन्ने तत्पदश-क्यताज्ञानं मानसं सम्पद्यत इति भावः ।

सामान्यलक्षणाऽनभ्युपगन्तृमतेऽप्याह-सामान्येति । शक्तिग्रहेति । बु-द्धिप्रकारवान् तत्पदशक्य इति शक्तिग्रहविशेष्यताऽवच्छेदको यः प्रका-

राश्रयस्यापूर्वधर्म्मिणः शक्तिग्रहाविषयत्वेऽपि शाब्दबोधे भानवत् शक्तिग्रहधर्म्मिताऽवच्छेदकताऽवच्छेदकानुगतरूपाश्रयस्यापूर्वधर्म्मस्यापि शक्तिग्रहविषयतां विना शाब्दबोधे न भानानुपपत्तिः, शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्यातन्त्रत्वादिति वाच्यम् ?

बुद्धिस्थत्वस्य शक्यताऽवच्छेदकताऽनवच्छेदकत्वेन शक्यताऽवच्छेदकानुगमकत्वायोगात्, तदवच्छेदकत्वे च तस्यापि शाब्दबुद्धौ शक्यताऽवच्छेदकघटत्वादिविशेषणतया नियमतो भानप्रसङ्गात् स्वरूपतो घटत्वादिप्रकारकशाब्दबोधानिर्व्वाहाद्, उपलक्षणेनापि शक्यताऽवच्छेदकानुगमे शक्यस्याप्युपलक्षणेनैवानुगमोऽस्तु किं विशिष्टे शक्त्या ?

---

स्तदाश्रयस्येत्यर्थः, अपूर्व्वधर्म्मिण इति । अत्र गृहे गौरस्ति तं ताडयेत्यादिवृद्धव्यवहारतो बुद्धिप्रकारगोत्वाद्यवच्छिन्ने गोव्यक्तिविशेषे शक्तिग्रहः; ततोऽपरगोव्यक्तिपदाद् गौर्भावति तं पश्येत्यादिवाक्यघटकाद् गोशब्दात् शक्तिसम्बन्धग्रहेण कारणेनानुभूतस्य गोपिण्डस्योपस्थितिः, ततश्च योग्यतावशेन गोत्वेन पूर्व्वागृहीता गोव्यक्तिरेव शाब्दबोधविषयो यथा भवति तद्वदत्र घटोऽस्ति तमानयात्र पटोऽस्ति तं परिधेहीत्यादिवृद्धव्यवहारतो बुद्धिस्थत्वरूपघटत्वपटत्वाद्यनुगमकधर्म्मेण घटत्वपटत्वादिविशिष्टे तच्छब्दस्य शक्तिग्रहाद्, अत्र चैत्रोऽस्ति तं पश्येत्यादिवाक्यघटकेन पूर्व्वाननुभूतचैत्रत्वाद्यवच्छिन्नपरतत्पदेनाननुभूतचैत्रत्वावच्छिन्नस्य स्मरणासम्भवेऽप्यनुभूतघटत्वाद्यवच्छिन्नस्य स्मरणे सति योग्यतावशेनापूर्व्वचैत्रत्वाद्यवच्छिन्नस्य शाब्दबोधे भाने बाधकाभाव इति भावः ।

नन्वेकव्यक्तौ शक्तिग्रहेणापरव्यक्तेः कुतः शाब्दबोधो; यत्र शक्तिग्रहस्तस्यैव शाब्दबोधनियमाद्? इत्यत आह—शक्तिधिय इति। अतन्त्रत्वादिति । अनियमादित्यर्थः । शक्यताऽवच्छेदकानुगमकत्वायोगादिति । नानाशक्यताऽवच्छेदकनिष्ठशक्तिज्ञानीयविशेष्यतानिरूपितैकप्रकारत्वायोगादित्यर्थः, तदवच्छेदकत्वे च=शक्यताऽवच्छेदकताऽवच्छेदकत्वे चेत्यर्थः । उपलक्षणेनापीति । शक्यताऽवच्छेदकताऽनवच्छेदकेनापीत्यर्थः । उपलक्षणेनैवेति । शक्यताऽवच्छेदकताऽनापन्नेनैवेत्यर्थः, अनुगमोऽस्तु=नानाशक्यनिष्ठविशेष्यतानिरूपितगोत्वादिशक्यताऽवच्छेदकनिष्ठैकप्रकारता-

अथ द्रव्यादिपदाद् घटत्वादिप्रकारकबोधप्रसङ्गवारणाय विशिष्टे शक्तिरुपेयते प्रकृते च बुद्धिस्थत्वस्योपलक्षणत्वेऽपि तेनानुगमने न किञ्चिद्बाधकमिति चेद् ?

अस्तु बुद्धिस्थत्वेनानुगतधर्म्मेणाननुगतानां प्रकाराणां शक्तिधीविषयत्वं; तथाऽपि सर्व्वनाम्नां नानाऽर्थत्वं दुष्परिहरमेव, साक्षात्परम्परया वा यदवच्छेदकं तदैक्यादेवावच्छेद्यैक्याद् बुद्धिस्थत्वस्यातथात्वाद्, उपलक्षणैक्येन शक्तैरैक्ये हर्य्यादिपदशक्यताऽवच्छेदकानामप्युपलक्षणीभूतेनान्ततो बुद्धिविषयत्वादिनाऽनुगमसम्भवेन नानाऽर्थमात्रोच्छेदप्रसङ्गाद्,

एवं बुद्धिस्थप्रकारवान् तत्पदशक्य इत्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधौ न सम्भवतः; जातिमान् हस्तिपकसम्बन्धीत्यादिज्ञानात् स्वरूपतो हस्तित्वप्रकारकस्मर-

---

शालिशाब्दधीरस्त्वित्यर्थः, किं=व्यर्थम्; विशेषणे शक्तिर्निष्प्रयोजनेति यावद्,

ननु येषां पदानां विशेषणे शक्त्यकल्पने दोषः स्यात्तेषां विशेषणेऽपि शक्तिरस्तु यस्य च तत्र शक्त्यकल्पने न दोषस्तस्य तत्र कुतः शक्तिः कल्प्यते ? इत्याशङ्कते—अथेति ।

तत्स्वीकारमाह—अस्त्विति । अननुगतानां घटत्वपटत्वादीनाम्, साक्षादवच्छेदकं घटत्वादिकं; परम्परयाऽवच्छेदकं लाङ्गूलत्वादिकम्, अवच्छेद्यैक्यं घटपशुभावादीनां घटपशुपदादीनाञ्च प्रतियोगित्वशक्त्याद्यैक्यम्, अतथात्वात्=साक्षात्परम्परया वाऽनवच्छेदकत्वाद्, अन्ततः=इतरधर्म्माणामनुगमाननुसन्धाने, नानाऽर्थमात्राच्छेदप्रसङ्ग इति । हर्य्यादिपदानां नानाशक्तिमत्त्वोच्छेदप्रसङ्ग इत्यर्थः,

ननु हर्य्यादिनानाऽर्थपदानां बुद्धिविषयत्वादेरनुपस्थितिकालेऽपि सूर्य्यादिशाब्दबोधोदयेन बुद्धिविषयत्वाद्युपलक्षितधर्म्मावच्छिन्न एकशक्तिकल्पना न सम्भवति तदादिसर्व्वनाम्नान्तु बुद्धिप्रकारत्वादेरनुपस्थितौ शाब्दबोधाजननस्य सर्व्वजनीनत्वेन तत्कल्पने बाधकाभावः ? अत आह—एवमिति ।

असम्भवप्रयोजकं कारणाभावं दर्शयति—जातिमानिति । जातित्वावच्छिन्नहस्तित्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितहस्तिपकसम्बन्ध-

णानुदयात् स्वरूपतस्तद्धर्म्मप्रकारेण यस्य सम्बन्धो गृहीतस्तादृश-सम्बन्धिज्ञानस्य कारणत्वाद्ध,

यथा याभ्यां रूपाभ्यां धर्म्मिणोः सम्बन्धो गृहीतस्तदेक-तररूपप्रकारकसम्बन्धिज्ञानादेवापरतद्रूपेणैव सम्बन्ध्यन्तरस्मरण-मित्यनुभवस्तथा यादृशरूपाभ्यां धर्म्मिणोः सम्बन्धग्रहस्तादृशैकधर्म-प्रकारकज्ञानादेव तादृशापरधर्मप्रकारेण धर्मिस्मरणमित्यपि,

तथा च यत्र किञ्चिद्विशेषितधर्म्मप्रकारकसम्बन्धज्ञानं तत्राविशे-षिततद्धर्मप्रकारकस्मरणस्यानानुभविकतयेष्टापत्तेरयोगाद्ध,

अन्यथा कदा चित् स्वरूपतस्तत्प्रकारिका कदा चिद्धर्म्मान्तरा-

---

प्रकारताकज्ञानादित्यर्थः, स्वरूपतो=जातित्वाद्यप्रकारेण, तद्धर्म्मप्रकारे-णेत्यनन्तरं धर्म्मिणीति पूरणीयम् ,

यस्येति । यद्धर्म्मावच्छिन्नस्येत्यर्थः, तथा च स्वरूपतस्तद्धर्म्मनिष्ठ-प्रकारताकधर्म्मिनिष्ठविशेष्यतानिरूपितयद्धर्म्मावच्छिन्नसम्बन्धप्रका-रताशालिज्ञानं जातमित्यर्थः, तादृशसम्बन्धिज्ञानस्येति । तद्धर्म्मप्रकारक-धर्म्मिविशेष्यकज्ञानस्येत्यर्थः,

याभ्यामिति । अविशेषितधर्म्मप्रकारेणेत्यर्थः; तदेकतरेति । अविशे-षिततदेकतरधर्म्मनिष्ठप्रकारतानिरूपितविशेष्यताज्ञानादित्यर्थः, स्व-रूपतो धर्म्मप्रकारकज्ञानजन्यानां स्वरूपतो धर्म्मपुरस्कारेण स्मरणानां-बाहुल्येन शीघ्रानुभावकतया दृष्टान्ततयोपन्यासः, यादृशरूपाभ्यामिति । किञ्चिद्धर्म्मविशेषितरूपाभ्यामित्यर्थः, धर्म्मिणोः=प्रतियोग्यनुयोगिनोः, तथा च तद्धर्म्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितसम्बन्धनिष्ठ-विशेष्यत्वावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नावच्छेदकताकविशे-ष्यताशालिज्ञानोत्तरं तद्धर्म्मावच्छिन्नप्रकारताकज्ञानात्तद्धर्म्मावच्छिन्न-प्रकारताशालिस्मरणं जायत इत्यर्थः,

इदमुपलक्षणं यद्द्यादृशरूपाभ्यां धर्म्मिणोः सम्बन्धग्रहः तादृशैक-तरधर्म्मपुरस्कारेणापरतद्धर्म्मावच्छिन्ने सम्बन्धज्ञानादपि तद्धर्मप्रकारेण स्मरणम्, एवं यादृशयद्रूपाभ्यामपि ज्ञेयम् ,

तथा चेति। सम्बन्धज्ञानस्मरणयोरेकरूपावच्छिन्नविषयकत्वानुभवे चेत्यर्थः, अन्यथेति । तद्धर्म्मान्यधर्मानवच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताक-विशेष्यतानिरूपितसम्बन्धनिष्ठप्रकारताशालिज्ञानत्वेन तद्धर्म्मेतरध-

वच्छिन्नतत्प्रकारिका स्मृतिरित्यत्र नियामकाभावप्रसङ्गात् ,

सामान्यलक्षणामनङ्गीकुर्वतां पुनरनिष्कृतिरेव, शक्तिग्रहाविषयस्यापूर्वधर्मस्य स्वरूपतः कथमपि भानासम्भवाद्ध , न हि बुद्धिविषयताऽवच्छेदकत्वेन धर्मान्तरबिषयकज्ञानं स्वरूपतोऽपरधर्मप्रकारकं ज्ञानं जनयितुं प्रभवति तथा सति समानप्रकारकत्वनियमस्यापि भङ्गप्रसङ्गादिति,

मैवम्—भगवत्सङ्केतरूपायां शक्तौ शक्यताऽवच्छेदकीभूतघटत्वपटत्वादावुपलक्षणीभूतबुद्धिविषयताऽवच्छेदकत्वप्रकारेण भासमाने

---

र्म्मानवच्छिन्नतद्धर्म्मनिष्ठप्रकारताशालिस्मरणं प्रति कारणत्वकल्पनया तादृशनियमास्वीकारेणेष्टापत्तौ चेत्यर्थः,

नियामकाभावप्रसङ्गादिति। तथा च किञ्चिद्धर्म्मपुरस्कारेण तद्धर्म्मावच्छिन्नेऽपरसम्बन्धज्ञानादनियमेन तादृशद्विविधस्मरणापत्तेरिति भावः,

सामान्यलक्षणाऽङ्गीकारे तु बुद्धिविषयताऽवच्छेदकत्वरूपसामान्यधर्म्मेण तदादिपदस्य प्रथमशक्तिग्रहात् पूर्व्वमपूर्व्वचैत्रत्वादिज्ञानसम्भवेन तादृशग्रहस्य तादृशचैत्रत्वादिप्रकारकत्वसम्भवादाह—सामान्यलक्षणामनङ्गीकुर्व्वतामिति। अनिष्कृतिरेव=अनुपपादनमेव,

नन्वत्र गृहे घटोऽस्ति तमानयेत्यादिवृद्धव्यवहारतः प्रथमं तत्पदस्य बुद्धिविषयताऽवच्छेदकत्वेन घटत्वेन घटे शक्तिसम्बन्धग्रहो जातः पश्चादत्र चैत्रोऽस्ति तं पश्येत्यादिवाक्यघटकापूर्व्वचैत्रत्वावच्छिन्नपरतत्पदस्यापि बुद्धिविषयताऽवच्छेदकत्वेन घटत्वावच्छिन्ने जायमानः शक्तिसम्बन्धग्रह एव स्वरूपतोऽपूर्व्वचैत्रत्वादिप्रकारकस्मरणं जनयेत्तथैव हेतुहेतुमद्भावकल्पनादित्यत आह—न हीति। भङ्गप्रसङ्गादिति। स्मरणानुभवयोः समानप्रकारकत्वस्य सर्व्वानुसिद्धत्वेन तस्यापलपितुमशक्यत्वादिति भावः।

सिद्धान्तमारभते—मैवमिति। शक्तिसम्बन्धस्यातिरिक्तत्वे घटत्वपटत्वादिरूपशक्यताऽवच्छेदकभेदेन न तस्या ऐक्यसम्भव इत्यत आह—भगवदिति। शक्ताविति। शक्तिपदार्थ इत्यर्थः, अत्र सप्तम्यर्थो विषयतानिरूपितत्वं तस्य च भासमाने भासत इत्युभयत्र भासधात्वर्थविषयतायामन्वयः, प्रकारेणेत्यत्र तृतीयाऽर्थः प्रकारतानिरूपितत्वं तस्य च भासमानपदघटकीभूतभासधात्वर्थे विषतायामन्वयः, घटत्वपटत्वादावित्यन्तं विशेष्यं-

तदादिपदजन्यबोधविषयताऽवच्छेदकत्वं भासते,

एवञ्च बुद्धिविषयताऽवच्छेदकरूपावच्छिन्नस्तत्पदाद्बोद्धव्य इत्याकारकस्य तत्पदं बुद्धिविषयताऽवच्छेदकरूपावच्छिन्नं बोधयत्वित्याकारकस्य वा संकेतस्य विषयताया अननुगतघटत्वपटत्वादिनिष्ठाया अप्यनुगतबुद्धिविषयताऽवच्छेदकत्वरूपावच्छिन्नतया शक्तेरैक्यम्,

घटपदादिसंकेतविषयतानां नानाघटादिव्यक्तिनिष्ठानां घटत्वाद्यनुगतधर्म्मावच्छिन्नत्वेन पश्वादिपदसंकेतविषयतानां प्रकारीभूतनानालोमादिव्यक्तिनिष्ठानां लोमत्वाद्यनुगतधर्म्मावच्छिन्नत्वेन तत्तत्पदशक्त्यैक्यवदननुगतसिंहत्वादिनिष्ठानां नानाऽर्थहर्य्यादिपदसंकेतविषयतानामनुगतयत्किञ्चिद्धर्म्मावच्छिन्नत्वाभावान्न शक्तेरैक्यम्,

तत्रोपलक्षणीभूतकिञ्चिद्धर्मप्रकारेणाभासमानस्यैव सिंहत्वादेर्भगवत्संकेतरूपायां शक्तौ हर्य्यादिपदजन्यबोधविषयताऽवच्छेदकत्वं भासत इति न नानाऽर्थमात्रोच्छेद इति,

---

भासमानेत्यन्तं विशेषणं, तदुत्तरसप्तम्या विषयत्वमर्थः; तस्य च निरूपितत्वसम्बन्धेन भासत इत्यत्र भासधात्वर्थेऽन्वयः, भासत इत्यत्राख्यातार्थ आश्रयत्वं विषयताऽवच्छेदकत्वामितिप्रथमान्तार्थेऽन्वेति, अत्रोपलक्षणत्वं पदजन्यशाब्दबोधीयविषयताऽवच्छेदकत्वावच्छिन्नशक्तिविषयताशून्यत्वम्,

तथा च भगवत्संकेतविषयतानिरूपिततादृशबुद्धिविषयताऽवच्छेदकत्वनिष्ठप्रकारतानिरूपितविषयताऽऽश्रयीभूतं यद् घटत्वपटत्वादिकं तन्निष्ठविषयतानिरूपितविषयताऽऽश्रयतदादिपदजन्यबुद्धिविषयताऽवच्छेदकत्वमित्यन्वयबोधः,

एवञ्च=घटत्वादावुपलक्षणीभूतबुद्धिविषयतयाऽवच्छेदकत्वावच्छिन्नशक्तिविषयत्वे च, घटत्वाद्यनुगतधर्मेण शक्यांशे विषयतैक्ये दृष्टान्तमुक्त्वाऽनुगतधर्मेण शक्यताऽवच्छेदकांशे विषयतैक्ये दृष्टान्तमाह—पश्वादिपदेत्यादि,

ननु भगवत्संकेतरूपायां शक्तौ पशुपदादिशक्यताऽवच्छेदकलोमाद्यंशे लोमत्वाद्यवगाहनेन तत्तत्पदजन्यशाब्दबोधेऽपि लोमत्वादेर्भानवत् शक्तौ तत्पदशक्यताऽवच्छेदकांशे बुद्धिविषयताऽवच्छेदकत्वस्य भाने

इयांस्तु विशेषः-तत्र घटत्वलोमत्वादिषु तत्तत्पदजन्यबोधविषयताऽवच्छेदकत्वं भासत इति तानि विशेषणान्युच्यन्ते; प्रकृते च बुद्धिविषयताऽवच्छेदकत्वे सर्व्वनामपदजन्यबोधविषयताऽवच्छेदकत्वं संकेतेन नावगम्यतेऽपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदुपलक्षणमिति गीयते,

यद्यपि घटादिपदसङ्केतस्य घटत्वादिविशिष्टविषयकत्ववत् सर्व्वनामसङ्केतेन बुद्धिविषयताऽवच्छेदकत्वे बोधविषयताऽवच्छेदकत्वानवगाहनेऽपि सङ्केतस्य तद्विशिष्टविषयकत्वमक्षतमेवेति सङ्केताविषये तद्विशेषणमेव,

---

शाब्दबोधे तस्य कथं भानं न स्याद्? इत्यतस्तयोः शाब्दबोधे भानाभानप्रयोजकवैलक्षण्यमाह—

इयांस्तु विशेष इति। तत्रेति। शक्तावित्यर्थः, विशेषणानीति। तथा च तत्पदजन्यबोधविषयताऽवच्छेदकत्वनिष्ठविषयतानिरूपितशक्तीयविषयतावत्त्वं साक्षात् परम्परया वा तत्पदशक्यविशेषणत्वं, सङ्केतीयतादृशविषयत्वस्यैव शाब्दबोधे प्रकारतया भानप्रयोजकत्वादिति भावः,

प्रकृते च=सर्व्वनामस्थले चेत्यर्थः, बुद्धिविषयताऽवच्छेदकत्व इति। अत्र विषयतानिरूपितत्वं सप्तम्यर्थः; तस्य चावगाह्यत इत्यत्राऽवगाह्यर्थविषयतायामन्वयः, सङ्केतेनेत्यत्र निरूपकत्वरूपकर्तृत्वं तृतीयाऽर्थः, अस्यापि तत्रान्वयः, अवगाह्यत इत्यत्र कर्म्माख्यातार्थाश्रयत्वस्यावच्छेदकत्वमित्यन्तप्रथमान्तार्थान्वितनञर्थाभावेऽन्वयः। तादृशविषयतासामानाधिकरण्यमात्रमिति। सर्व्वनामपदजन्यबोधविषयतासामानाधिकरण्यमित्यर्थः, अस्य चावगाह्यत इत्यनेनान्वयः, तदुपलक्षणं=शक्योपलक्षणम,

ननु तत्पदजन्यबोधविषयताऽवच्छेदकत्वेन सङ्केतविषयत्वरूपविशेषणत्वं शक्यविशेषणमिति व्यवहारप्रयोजकमेवास्तु, शाब्दबोधे प्रकारतया भानप्रयोजकन्तु यद्विशिष्टे सङ्केतस्तत्त्वं,-

तच्च सङ्केतीयविशेष्यतानिरूपितवैशिष्ट्यरूपसम्बन्धाविषयताकविषयत्वमेव,

एवञ्च बुद्धिविषयताऽवच्छेदकत्वे सर्व्वनामपदसंकेतीयतादृशविषयतायाः सत्त्वेन कुतो न तस्य शाब्दबोधप्रकारतया भानमित्याशङ्कते—यद्यपीति।

एवं शक्यविशेषणघटत्वादिनिष्ठे बोधविषयताऽवच्छेदकत्वरूप-बोधविषयतानिष्ठसङ्केतविषयतानिरूपितविषयतारूपशक्यत्वे तदव-च्छेदकमपि; तथाऽपि बोधविषयतया सङ्केतविषयत्वरूपशक्यतायास्त-त्रासत्त्वेन शक्ये न तद्विशेषणं, शक्यव्यावर्त्तकशक्यस्यैव शक्य-विशेषणत्वादिति तस्य शक्योपलक्षणतयाऽऽकाशपदजन्यशाब्दबोधे शब्दाश्रयत्वभानानियमवत् तदादिपदजन्यबोधे तदभाननिर्व्वाहः,

तद्वीजन्तु तदुपलक्षितघटत्वादिविषयकत्वेन तदविषयकघटत्वा-

---

ननु तर्हि घटत्वादेरिव बुद्धिविषयताऽवच्छेदकत्वस्य घटादौ साक्षा-द्भानं न कुतः? इत्यत अाह—एवमिति। शक्यत्व इति। अत्र सप्तम्यर्थ-निरूपितत्वस्यावच्छेदकपदार्थघटकावच्छेदकतायामन्वयः, तदिति। बु-द्धिविषयताऽवच्छेदकत्वमित्यर्थकं, शक्यांशे शाब्दबोधीयविषयत्वेन सङ्केतविषयत्वरूपविशेषणत्वस्य शक्यविशेषणव्यवहारप्रयोजकतावत् शाब्दबोधप्रकारताप्रयोजकत्वाद् न तदापत्तिरिति समाधत्ते-तथाऽपीति।

तत्रेति। बुद्धिविषयताऽवच्छेदकत्व इत्यर्थः, न तद्विशेषणमिति। तद्= बुद्धिविषयताऽवच्छेदकत्वं, न विशेषणं शाब्दबोधप्रकारताप्रयोजकविशे-षणत्वाभाववदित्यर्थः,

ननु शक्तौ शक्यांशे भासमानत्वे सति तदनुगमकस्यैव विशेषण-त्वेन बुद्धिविषयताऽवच्छेदकत्वस्य कुतो न सर्व्वनामपदशक्यविशेष-णत्वमत आह—शक्यव्यावर्त्तकशक्यस्यैवेति। शक्यव्यावर्त्तकत्वं शक्यानुग-मकत्वं, तच्च नानाशक्यनिष्ठविशेष्यतानिरूपितैकप्रकारत्वं न त्वितर-व्यवच्छेदकत्वं सर्व्वादिपदशक्यताऽवच्छेदकस्य सर्व्वत्वादेरितरव्यवच्छे-दकत्वासम्भवात्, शक्यस्यैवेति। तत्तत्पदजन्यबोधविषयत्वेन संकेतवि-षयताऽऽश्रयस्यैवेत्यर्थः।

शक्यविशेषणत्वादिति। तथा च शक्यानुगमकत्वे सति पदजन्य-बोधविषयत्वेन सङ्केतीयविषयत्वस्यैव शक्यविशेषणतात्वमिति भावः,

शब्दाश्रयत्वभानानियमवदिति। आकाशपदस्य स्वरूपतः शक्त्यङ्गीकर्त्तॄ-णां मते शब्दाश्रयत्वस्योपलक्षणत्वादिति भावः, तदभाननिर्व्वाहः= बुद्धिविषयताऽवच्छेदकत्वाविषयत्वनिर्व्वाहः,

ननु शक्तौ बुद्धिविषयताऽवच्छेदकत्वस्योपलक्षणत्वं न तु विशेषण-त्वमित्यत्र किं नियामकम्? इत्यत आह—तद्वीजन्त्विति। यथा यद्विशिष्टवि-

दिबोधस्यापि सङ्केतविषयत्वं, घटादिपदसङ्केतस्य च घटत्वादिविशिष्टविषयकबोध एव विषय इति तज्जन्यबोधे तादृशधर्म्मभाननियमः, यथा यद्विशिष्टविशेष्यकबोधविषयत्वं संकेतविषयस्तच्छक्यताऽवच्छेदकतया व्यवह्रियते, तथा यद्विशिष्टप्रकारविशिष्टविशेष्यकबोधविषयत्वं तथा तच्छक्यताऽवच्छेदकताऽवच्छेदकमित्युच्यते प्रकृते च बुद्धिविषयताऽवच्छेदकत्वन्तथेति न तच्छक्यताऽवच्छेदकं न वा तत्त्वावच्छेदकं, जातित्वादिविशिष्टघटत्वाद्यवच्छिन्नस्य तदादिपदाद्यधीनबोधे

---

शेष्यकबोधविषयत्वमिति तद्विशिष्टनिष्ठविशेष्यताऽऽत्मकविषयताप्रकारताकत्वमित्यर्थः,

स्वरूपतो घटत्वादिना घटादेः शाब्दबोधोपपादिकां तद्रूपेण तच्छब्दे शक्तिं व्युत्पाद्य; जातित्वादिकिञ्चिद्धर्म्मपुरस्कारेण घटत्वादिना घटादेः शाब्दबोधप्रयोजिकां शक्तिं व्युत्पादयति–जातित्वादिविशिष्टेति । अथ तत्पदजन्यजातित्वावच्छिन्नघटत्वनिष्ठप्रकारताकशाब्दबोधं प्रति तत्पदजन्यप्रकारताकविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकावच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रकारतात्वावच्छिन्नावच्छेदकताकविषयतानिष्ठप्रकारताकजातिमत्त्वावच्छिन्नविशेष्यताशालिसङ्केतविषयकज्ञानत्वेन हेतुता वक्तव्या,

सङ्केताकारस्तु–जातिमान् तत्पदजन्यबोधीयबुद्धिविषताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नप्रकारताकविषयतावान् भवत्विति तु न वक्तुं शक्यते; यतो यत्र घटत्वत्वादिना घटत्वाद्यवच्छिन्नो वक्तृबुद्धिस्थस्तत्तात्पर्य्येणापि तच्छब्दप्रयोगस्तत्र घटत्ववान् तत्पदबोधीयबुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नप्रकारताकविषयतावान् भवत्वित्यादिरीत्या सङ्केता वाच्याः;

तथा च सङ्केतस्य नानात्वेन तस्य नानाऽर्थत्वापत्तेः, अपि तु तत्पदं बुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नप्रकारताकविषयताशालिबोधजनकं भवत्वित्याकारो वाच्यः;

एवञ्च तत्पदं बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने शक्तमित्याकारकसङ्केतज्ञानात् कदा चिज्जातित्वेन घटत्वावच्छिन्नस्योपस्थितिः कदा चिद् घटत्वत्वादिना घटत्वावच्छिन्नस्योप-

तु बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्म्मविशिष्टावच्छिन्नविषयकत्वावगाही सङ्केतः प्रयोजक इति तत्र जातित्वावच्छिन्नघ-

---

स्थितिरिति क्वचिज्जातित्वादिना क्वचिद् घटत्वत्वादिना शाब्दबोध इति नियमस्यानुपपत्तिरिति चेद् ?

न-श्रोता पुरुषो यदा जातित्वादिना घटत्वावच्छिन्नो वक्तृबुद्धिविषय इति प्रकरणादिना ज्ञात्वा जातित्वविशिष्टावच्छिन्नस्तत्पदशक्य इति जातिविशिष्टे शक्तिं गृह्णाति तदा जातित्वेन घटत्वावच्छिन्नं—प्रतिपद्यते,

यदा तु घटत्वत्वेन घटत्वावच्छिन्ने प्रकरणादिना वक्तृबुद्धिविषयत्वं गृह्णाति तदा तत्तुल्यरीत्या तद्रूपेण तत्र शक्तिमवधार्य्य तं शब्दाद्बुध्यत इत्येतं शक्तिग्रहशाब्दबोधकल्पनेऽनुपपत्त्यभावाद्, एतच्चाग्रे व्यञ्जयिष्यामः,

नन्वेवमपि सर्व्वनामपदाज् जातित्वादिना घटत्वावच्छिन्नशाब्दबोधोत्पत्तये बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्म्मविशिष्टावच्छिन्ने पृथक् शक्तिकल्पने नानाऽर्थत्वापत्तिर्दुर्व्वारैवेति चेद् ?

अत्र केचित्—साक्षात्परम्परासाधारणबुद्धिविषयताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यधिकरणत्वेनोपलक्षणेन स्वरूपतो घटत्वावच्छिन्ने जातित्वादिना च घटत्वाद्यवच्छिन्न एकैव शक्तिः कल्प्यते, जातित्वादिविशिष्टेत्यादिग्रन्थस्तु तद्रूपेणैकशक्तिग्रहपरः, अन्यथा नित्यत्वे सत्यनेकसमवेतत्वरूपजातित्वस्य सखण्डतया बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वेन तस्यानुगमासम्भवाद्, घट एकत्ववानितिज्ञानीयविशेष्यताऽऽख्यविषयताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यधिकरणत्वस्य स्वरूपतो घटत्वे जातिमानेकत्ववानित्यादिज्ञानीयविशेष्यतारूपविषयताऽवच्छेदकतात्वावच्छिन्नपर्य्याप्त्यधिकरणत्वस्य च जातित्वविशिष्टघटत्वादौ वृत्तेः,

अथ वा तत्तद्बुद्धिविषयताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्तिसम्बन्धेन तादृशावच्छेदकतात्वावच्छिन्नवत्त्वस्य घटत्वादौ तादृशजातित्वाद्यवच्छिन्ने च सत्त्वेन तादृशतादृशज्ञानमादाय तादृशतादृशतत्तद्धर्म्मैऽनुगतोपलक्षिततत्तद्धर्म्मेणानुगतशक्यताऽवच्छेदकत्वसम्भव इत्याहुः,

नव्यास्तु बुद्धिविषयताऽवच्छेदकत्वेन घटत्वपटत्वचैत्रत्वादीनां बुद्धिविषयताऽवच्छेदकत्वेन स्वरूपत एकशक्यताऽवच्छेदकत्वम्, अतो न

टत्वादिनिष्ठप्रकारतैव विषय इति न जातिमानित्यादिबोधकाले घट इत्याकारकबोधः,

अथ किञ्चित्प्रकारेण भासमानधर्म्मेऽवच्छेदकत्वे भासमाने तद्विशिष्ट एव भासते न तदुपलक्षित इति नियमः, कथमन्यथा स्वरूपतो घटत्वावच्छिन्नाभावस्य न जातिमान्नास्तीत्याकारिका प्रतीतिः ?

एवञ्च बुद्धिविषयताऽवच्छेदकत्वोपलक्षिते कथं बोधविषयताऽवच्छेदकत्वं सङ्केतेनावगाहनीयमिति चेद्‌ ?

न–अवच्छेदकताया अवच्छेद्याश्रयविशेषणताऽऽपन्नस्य संसर्ग-

---

तत्तद्धर्म्मभेदेन शक्तेर्भिन्नत्वं. समवेतत्वादिना जातित्वादिना च घटत्वादौ जातित्वादौ च बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वेन तदवच्छेदकत्वेन च पृथक्शक्यताऽवच्छेदकत्वं; सर्व्वनाम्नो नानाऽर्थता च स्वरूपतः शक्यताऽवच्छेदकताऽवच्छेदकादिभेदेनेष्यत एवेति प्राहुः,

वस्तुतस्त्वनुगमघटितवक्ष्यमाणसिद्धान्तकल्पे सर्व्वसाधारणैकशक्तिकल्पनप्रकारो दर्शयिष्यत एवातोऽत्राशङ्कासमाधानाभ्यामलमिति ब्रूमः,

न जातिमानिति । सङ्केतेन यादृशबोधोऽवगाह्यते तादृशबोधं प्रति तादृशसङ्केतज्ञानस्य कारणत्वादिति भावः,

तदवच्छेदकताऽनापन्नेन धर्म्मेण भासमानेऽवच्छेदकत्वमङ्गीकर्त्तु न शक्यत इति शङ्कयते–अथ तद्विशिष्ट एवेति । विशेषणेऽवच्छेदकत्वं भासत इति भावः, न जातिमान् नास्तीत्यकारिकेति । तथा च जानिमान् नास्तीत्याकारकप्रतीतेः स्वरूपतो घटत्वाद्यवच्छिन्नाभावविषयकत्वे घटशून्यपटवति देशे जातिमान्नास्तीति प्रतीत्यापत्तेरिति भावः,

यो धर्म्मो भासते येन तद्विशिष्टे हि भासते ।
तत्रावच्छेदकत्वं वै न तु तेनोपलक्षिते ॥
संसर्गविधया भाने नियमोऽयं प्रकीर्त्तितः ।
अन्यथा तत्पदाच्छक्तेर्भानमेव हि दुर्लभमिति–
कारिकोक्तदिशा सिद्धान्तमारभते—

अवच्छेदकताया इति । अवच्छेद्याश्रयः = प्रतियोगित्वाद्याश्रयः, तत्र विशेषणत्वं तन्निष्ठविशेष्यताकप्रकारताऽऽश्रयत्वं, तदापन्नस्य=तदाश्रयस्य,

विधया भान एव तथा नियमाद्,

अन्यथा धूमव्यापकताऽवच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववानित्याकारकव्यापकताऽवच्छेदकत्वोपलक्षितवह्नित्वाद्यवच्छिन्नाभावप्रतीत्यनुपपत्तेः,

प्रकृते च तत्पदं बुद्धिस्थप्रकारावच्छिन्नविषयताकबोधं जन-

---

संसर्गविधया = तन्निरूपितसांसर्गिकविषयतया, अत्र च तृतीयाऽर्थोऽभेदस्तस्य च भाधात्वर्थविषयतायामन्वयः, तथा नियमादिति । तद्विशिष्टे हि भासत इति नियमादित्यर्थः,

अयमाशयः—घटो नास्तीत्यादिप्रतीतौ घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटादेरभावादौ भानेन तत्रावच्छेदकतायाः संसर्गविधया भानाद्; अवच्छेद्यप्रतियोगित्वाश्रये घटे घटत्वं विशेषणमेव, तथा च तत्र घटत्वादिकमवच्छेदकमेव न तूपलक्षणमिति,

ननु किञ्चिद्धर्म्मप्रकारेण भासमाने यत्रावच्छेदकत्वं भासते तद्विशिष्ट एव तदिति सामान्यनियम एवादरणीयो लाघवादित्यतस्तत्र बाधकमाह—अन्यथेति ।

अवच्छेदकतायाः संसर्गविधया भान एव तादृशनियम इत्यस्वीकार इत्यर्थः, धूमव्यापकताऽवच्छेदकेत्यादि । धूमाभावरूपव्याप्याभावानुमापकतादृशप्रतीत्यनुपपत्तेरित्यर्थः, तथा च तादृशानुमित्यनुत्पादभयेनोक्तज्ञानस्यापह्नोतुमशक्यत्वादिति भावः,

न च तत्र धूमव्यापकताऽवच्छेदकत्वावच्छिन्नवह्नित्वनिष्ठावच्छेदताकप्रतियोगिताकाभाववत्त्वज्ञानस्यैव व्याप्याभावानुमितिहेतुत्वमिति वाच्यम्?

तादृशरूपेण कारणत्वे व्यापकताऽवच्छेदकवान्नास्तीत्याकारकज्ञानस्यैव हेतुतया प्रमेयत्वादेरपि धूमव्यापकताऽवच्छेदकतया तदवच्छिन्नाभावाप्रसिद्ध्या विशेषदर्शिनां तादृशज्ञानानुपपत्तेः,

न च धूमव्यापकताऽवच्छेदकत्ववह्नित्वत्वोभयधर्म्मावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावज्ञानत्वेन हेतुता; तथा च धूमव्यापकताऽवच्छेदकवह्नित्ववान्नास्तीत्याद्याकाराभावज्ञानस्यैव प्रसिद्धत्वान्न तद्दोष इति वाच्यम्?

तादृशरूपेण हेतुत्वे धूमव्यापकताऽवच्छेदकत्वादेरप्यभावप्रतियोगिताऽवच्छेदककोटिप्रविष्टस्य विषयतायाः कारणताऽवच्छेदक-

यत्त्वित्याकारकोऽवच्छेद्यावच्छेदकभावप्रकारक एव सङ्केतोऽङ्गीकार्य्य इत्यनुपपत्तेरभावाद्, स्वरूपतो घटत्वादिप्रकारकस्मरणाद्युपयोगी शक्तिग्रहः स्वरूपतो घटत्वादिप्रकारक एव; यदा स्वरूपतोयद्धर्म्मप्रकारकज्ञानसामग्री तदैव स्वरूपतस्तद्धर्म्मप्रकारेण शक्तिं गृहीत्वा स्वरूपतस्तत्प्रकारेण धर्म्मिणं स्मरत्यनन्तरमनुभवति च; मानसे च शक्तिग्रहे न व्यवहारदर्शनादेरपेक्षा; अपि त्वसंसर्गाग्रहसहितोपस्थितेरेवेति, यद्धर्म्मावच्छिन्ने तदादिपदघटितवाक्याद् व्यवहारो न दृष्टस्तदवच्छिन्नस्यापि मानसशक्तिग्रहाद् बोधः सुघट एव,

---

घटकतया महागौरवापत्तेः, गुरुधर्म्मस्याभावप्रतियोगिताऽनवच्छेदकत्वे तादृशाभावाप्रसिद्धेश्च तादृशनियमस्य सङ्कोचकल्पनायान्याय्यत्वाद्,

न चेदमप्रामाणिकं ? येन रूपेण व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेनाभाववत्ताज्ञानं हेतुरित्यादिना दीधितिकृता तथा लिखितत्वाद्,

एतच्चाभावसाध्यकस्थले व्यापकत्वविशिष्टवैशिष्ट्यानवगाहिज्ञानस्यापि कारणत्वमत उक्तं, तेन मतविशेषे धूमादिव्यापकताऽवच्छेदकत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानस्यापि कारणत्वे न क्षतिरिति मन्तव्यम्,

ननु स्वरूपतो घटत्वादिप्रकारकशक्तिग्रहः कदा चित् कुतो जायत इत्यत आह—यदा स्वरूपत इति। घटोऽस्य वक्तुर्बुद्धिस्थ इत्याकारकश्रोतृज्ञानसामग्रीत्यर्थः। श्रोतेति कर्त्तृपदमध्याहार्य्यम्,

नन्वत्र घटोऽस्ति तमानयेत्यादिव्यवहारदर्शनादिना घटादौ तत्पदस्य शक्तिग्रहः सुघटोऽस्तु; यत्र व्यवहारो न दृष्टस्तत्र शक्तिग्रहः कुतो जायत इत्यत आह—मानसे चेति। असंसर्गाग्रहे सतीत्यादि। असंसर्गाग्रहः=तद्धर्म्मावच्छिन्ने तत्पदशक्यत्वबाधनिश्चयाभावः, तत्सहिता या तत्पदशक्यत्ववतत्पदार्थोपस्थितिस्तस्या इत्यर्थः, मानसशक्तिग्रहाद्=उपनयजन्यालौकिकमानसशक्तिग्रहात्,

ननु बाधनिश्चयाभावसहकृततत्तद्विशेषणोपस्थित्या यदि विशिष्टशक्तिग्रहो जायते; तदा शक्तिविपरीतकोटेरपि बाधकाभावेनोपस्थितिसम्भवेन तत्तत्संशयो जायत एवेति कथं शक्तिनिर्णय इत्याशङ्केते—न चेति। बाधितस्य=शक्त्यादिविरहस्य,

न च व्यवहारदर्शनाद्यविषये मनसा शक्तिर्निश्चेतुं न शक्यते विपरीतकोटेरप्युपस्थितिमात्रेण मानसज्ञाने भानसम्भवादिति वाच्यम् ?

उपस्थितस्यापि बाधितस्य दोषमन्तरेणाभानान्निश्चयस्याप्युपपत्तेः,

एवं सति कतिपयविषयेषु सर्व्वनामघटितवाक्याद्व प्रयोज्यस्य प्रवृत्तिमुपलभमानः प्रवर्त्तकज्ञानविषयकतिपयविषये शक्तिं कल्पयन् बुद्धिविषयताऽवच्छेदकधर्म्मावच्छेदेन तत्पदशक्यत्वं सामान्यतोऽवधारयति,

एवञ्च चैत्रोऽस्य बुद्धिविषयताऽवच्छेदकधर्म्मवानिति यदा तेन गृह्यते तदानीमस्य चैत्रस्तत्पदवाच्यो न वेति सन्देहो नावतरितुमर्हति,

---

ननु लौकिकप्रत्यक्षादौ विषयस्य बाधितस्य भाने पित्तादिदोषापेक्षाऽस्तु यत्रालौकिकसन्निकर्षादिनैककोटिरपि निर्णेतुं न शक्या तत्र बाधिता कोटिरुपस्थितिबलाद् दोषमनपेक्ष्यैव भासताम्; अन्यथा धूमादौ वह्निव्यभिचारस्य च सन्देहः कदाऽपि न स्यात, स्याच्च तर्कानुसरणस्य शास्त्रकाराणां युक्त्यन्तरप्रदर्शनस्य वैकल्यमिति तत्तद्विपरीतकोटेः स्वतो भानं बाधकं दर्शयितुमाह—एवं सतीति ।

कतिपयविषयेष्विति । गोघटादिष्वित्यर्थः, सर्व्वनामघटितवाक्यतोऽत्र गृहे गौरस्ति तमानयेत्यादिवाक्यात्, प्रयोज्यस्य=नियोज्यपुरुषस्य, प्रवृत्तिं=गवानयनादिषु प्रवृत्तिम्, उपलभमानः=निश्चिन्वन्, समीपस्थपुरुष इति शेषः, कल्पयन्=अनुमिन्वन्, बुद्धिविषयताऽवच्छेदकधर्म्मावच्छेदेनेति ।

न च यदि प्रवर्त्तकज्ञानविषयकतिपयपदार्थे शक्तिज्ञानेन सामान्यतोबुद्धिविषयताऽवच्छेदकावच्छेदेन शक्त्यवधारणं जायते; तदा तुरीतन्तुप्रभृतिकतिपयद्रव्येषु पटादिजनकत्वदर्शनेन द्रव्यत्वावच्छेदेन पटादिजनकत्वं गृह्णीयादिति वाच्यम् ?

यथा कतिपयदण्डेषु घटजनकत्वं दृष्ट्वा व्यभिचारदर्शनलाघवज्ञानादिसहकारेण दण्डत्वावच्छेदेन तदवधारयति तद्वदत्रापि तादृशज्ञानजनने बाधकाभावाद्; अन्यथा निखिलधर्म्मिज्ञानासम्भवेन जलाद्य-

यादृशधर्म्मावच्छेदेन यदवधारितं तादृशधर्म्मनिश्चयस्य स्वसमानधर्म्मिताऽवच्छेदककतद्विरोधिकोटिभानविरोधित्वादिति सम्भवत्येवापूर्व्वविषयेऽपि मानसः शक्तिनिश्चयः,

अथैवमपि तत्पदे चैत्रत्वविशिष्टवाचकतासन्देहस्य दुरुच्छेदतया तत्पदाद्व्यवहारदर्शनाविषयचैत्रत्वावच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव, तद्धर्म्मप्रकारकशाब्दबोधे तद्धर्म्मविशिष्टवाचकतानिश्चयस्य हेतुत्वाद्, अन्यथा गवादिपदादभ्रान्तस्य शक्त्या सास्नाऽऽदिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेद् ?

न—तत्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वपटत्वादिविशिष्टे व्यवहारदर्शनात् तत्पदस्य शक्तिं गृहीत्वा; यद्यत्तत्पदं यादृशयादृशधर्म्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत्तत् तत्पदं तद्धर्म्मविशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति,

---

वच्छेदेन वह्निमत्त्वादिज्ञानं कदाऽपि नोत्पद्येत, द्रव्यत्वाद्यवच्छेदेन घटादिजनकत्वग्रहस्तु व्यभिचारदर्शनेन न जायत इति,

ननु बुद्धिविषयताऽवच्छेदकावच्छेदेन तत्पदशक्यत्वनिश्चयसहकृतस्य चैत्रत्वावच्छिन्ने बुद्धिविषयताऽवच्छेदकवत्तानिश्चयस्य विपरीतकोटिनिरासद्वारा सामान्यतश्चैत्रत्वावच्छिन्ने तत्पदशक्यत्वनिश्चायकत्वेऽपि तत्पदशक्यत्वं चैत्रत्वावच्छिन्नं किमन्यधर्म्मावच्छिन्नमिति सन्देहानिरासात् तत्पदे चैत्रत्वविशिष्टवाचकतासन्देहोदयेन तादृशनिश्चयाजननात् कुतस्तत्पदाच् चैत्रत्वविशिष्टस्य शाब्दबोध इत्याशङ्कते—अथैवमपीति । गवादिपदं सास्नाऽऽदिमत्त्वादिविशिष्टवाचकमिति भ्रमवतः सास्नाऽऽदिमत्त्वेन शाब्दबोधस्येष्टापत्तेराह—अभ्रान्तस्येति ।

सिद्धान्तमारभते—तत्तत्पदप्रयोजकेति । शक्तिं गृहीत्वेत्यन्तेन तत्तद्धर्मविशिष्टवाचकत्वस्य च परस्परं सहचारदर्शनं व्यभिचारादर्शनञ्च व्याप्तिग्राहकं पूर्व्वमस्तीति सूचितं, सामान्यतो व्याप्तिमवधारयतीति । सामान्यतो व्याप्त्यवधारणञ्च यत्र प्रकृतसाध्यसाधनयोः सहचाराद्यनिश्चयेन व्याप्तिग्रहासम्भवेऽपि तत्सजातीयसाध्यसाधनयोः सहचारदर्शनादिजन्यव्याप्तिनिश्चयः तादृशव्याप्तिनिश्चयसहितेन,

अथ वा सजातीयनानाहेतौ सजातीयनानासाध्यसहचारग्रहस्य प्रकृतहेतौ प्रकृतसाध्यव्याप्तिग्रहं प्रति स्वातन्त्र्येण हेतुताकल्पनात् प्रकृ-






तदनन्तरञ्च प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वे प्रकरणादिना यत्र तत्पदे गृह्णाति तत्र पक्षे तादृशहेतुना चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्म्मताबलादनुमित्यात्मकनिश्चयेनावगाहनसम्भवाद्‌ न काऽप्यनुपपत्तिः,

---

तद्धेतोः पक्षधर्म्मतामात्रग्रहेण सजातीयसाध्यहेतुसहचारदर्शनजन्यव्याप्तिग्रहेण वा प्रकृतसाध्यानुमितिरिति भावः,

न च प्रकृतसाध्यव्याप्यहेतुनिश्चयासत्त्वेन कुतोऽनुमितिरिति चेद्‌ ?

न-व्यतिरेकसाध्यकस्थले प्रतियोगिताऽवच्छेदकावच्छिन्नव्यापकाभावनिश्चयस्येव तादृशज्ञानस्यापि स्वातन्त्र्येणैव हेतुत्वाद्‌ ,

अन्यथा स्वकीयस्तनादिविषयककृतिसाध्यत्वज्ञानप्रवृत्त्योः सहचारदर्शनेन यो यत्र प्रवर्त्तते स तं कृतिसाध्यतया जानातीति सामान्यव्याप्तिमवधार्य्य; बालकस्य गवानयनादौ प्रवृत्तिदर्शनेन गवानयनादिविषयकप्रयोज्यपुरुषीयकृतिसाध्यत्वज्ञानानुमित्यनुत्पपत्तेरनुपत्तेश्च लिङ्गस्तदधीनकार्य्यत्वशक्तत्वज्ञानस्य,

ननु साधनसजातीये साध्यसजातीयव्याप्तिनिश्चयादेव यदि प्रकृतसाध्यानुमितिर्भवति तदा दीधितिकारस्य यो यदीययावद्विशेषाभाववान् इत्यादिना सामान्यव्याप्तिं प्रदर्श्याग्रे यत्त्वतत्त्वयोरननुगमादित्यनेन तद्दूषयणदानस्यासङ्गत्यापत्तेः, यत्त्वतत्त्वयोरननुगमस्य तद्विघटकत्वादिति चेद्‌ ?

न-यो यदीयेत्यादिवाक्यस्य प्रकृतसाध्यतत्सजातीयसाधारणाद्यनुगतरूपेणैकव्याप्तिपरत्वमभिप्रेत्य प्रथमतो दूषणं प्रदर्श्य; तत उक्तरीत्या दोषासम्भवेनैकावच्छेदेनेत्यनेन दोषान्तरप्रदानात्‌, साजात्यञ्चात्र स्वसाध्यकानुमितिप्रयोजकोदाहरणघटकाद्विरुक्तयत्पदतात्पर्य्यविषयत्वेन, एवमन्यत्रापि यथायथं बोध्यम्‌ ,

तादृशहेतुनेति । चैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यतत्पदत्वहेतुनेत्यर्थः, चैत्रत्वविशिष्टवाचकत्वस्य जन्यबोधीयचैत्रत्वनिष्ठानिरवच्छिन्नावच्छेदकताकविषयतात्वावच्छिन्नप्रकारकताकेच्छीयविशेष्यतायाः परम्परया निरूपकत्वस्य, प्रागसिद्धस्यापि=प्रागननुभूतस्यापि,

तत्पदं बुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्म्मविशिष्टवाचकमिति वृद्धव्यवहारतो जायमानं शक्तिज्ञानं बुद्धिविषयताऽवच्छेदकत्वरूपसामान्यप्रत्यासत्त्या ज्ञायमानघटत्वचैत्रत्वादिनिखिलविषयकं भवति तज्ज-

के चित्तु बुद्धिविषयताऽवच्छेदकत्वेनानुगतधर्म्मेण सकलधर्म्मविषयकसंस्कारस्य सामान्यप्रत्यासत्त्यधीनानुभवजन्यस्य सत्त्वे प्रमुष्टबुद्धिविषयताऽवच्छेदकतांशं स्वरूपतश्चैत्रत्वादिप्रकारकशक्तिस्मरणं निराबाधमिति; तन्मूलकमेव स्वरूपतोऽपूर्व्वचैत्रत्वादिप्रकारकशाब्दज्ञानं भविष्यतीति किमनुपपन्नं ? स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकसंस्कारानुभवयोरनपेक्षणाद्, उद्बोधकवैचित्र्यादेव कदा चिज्जातिमान् इत्याकारकं कदा चिद् घट इत्याकारकं स्मरणमिति नियमोपपत्तेः, स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोऽपि जातित्वादिना घटत्वादिप्रकारकात् संस्कारात् कदा चित् स्वरूपतोघटत्वाद्यप्रकारकस्य जातिमानित्याकारकस्मरणोदयेन स्वरूपतस्तत्प्रकारिकायां स्मृतौ तादृशसंस्कारानुभवयोर्विशिष्य हेतुत्वेऽप्युद्बोधकविशेषविरहस्य तादृशस्मृतिविरहप्रयोजकताया आवश्यकत्वात्,

---

न्यसंस्कारोऽपि तथा, तदधीनस्मरणञ्च बुद्धिविषयताऽवच्छेदकत्वानवगाहि तत्पदं चैत्रत्वादिविशिष्टवाचकमित्याद्याकारकं जायते तदंशउद्बोधकाभावात्, फलबलेन च तत्तद्विषयकसंस्कारस्यापि तत्तदंशउद्बोधकाभावसहकारेण तत्तदविषयकस्मरणं प्रत्यपि हेतुत्वकल्पनादिति वदतां केषाञ्चिन्मतमाह—के चित्त्विति।

प्रमुष्टबुद्धिविषयताऽवच्छेदकतांशं = प्रमुष्टं त्यक्तं स्वाविषयकबुद्धिविषयताऽवच्छेदकतांशमिति यावद्, अनपेक्षणादिति। तथा च जातित्वेतरधर्म्मानवच्छिन्नघटत्वनिष्ठप्रकारताकविशेष्यताशालि स्मरणादिकंप्रति जातित्वावच्छिन्नघटत्वनिष्ठप्रकारताकविशेष्यताशालिसंस्कारत्वेन तादृशविषयताऽऽदिशाल्यनुभवत्वेन च कारणत्वमिति भावः।

नन्वेवं सति जातित्वेन घटत्वप्रकारकसंस्काराज् जातित्वेन घटत्वप्रकारकं स्वरूपतो घटत्वप्रकारकञ्च स्मरणं नियतं स्यादत आह—उद्बोधकवैचित्र्यादेवेति। उद्बोधकवैलक्षण्यादेवेत्यर्थः, तथा च यदा जातित्वेन स्मरणप्रयोजकम् उद्बोधकं सम्भवति तदा तद्रूपेण स्मरणं, यदा स्वरूपतो घटत्वप्रकारकस्मरणप्रयोजकमुद्बोधकं तदा तादृशं स्मरणमित्यनियमो नेत्यर्थः, स्वरूपतस्तत्प्रकारकस्मरणं प्रति स्वरूपतस्तत्प्रकारकसंस्कारानुभवयोः कारणत्वेऽप्युद्बोधकस्य नियामकत्वमावश्यकं; न तु मन्मत एवेत्याह—स्वरूपत इति। आवश्यकत्वादिति। उद्बोधकाविशेष-

तादृशहेतुताया अप्रामाणिकत्वात्,

कथमन्यथा विशेषणान्तरानवच्छिन्नाऽस्मदाद्यदृष्टशरीरविशेषनिष्ठजातिविशेषावच्छिन्नसङ्केतितरामरावणादिपदेभ्यो वाक्यार्थधीरस्माकं—

कथं वा निर्व्विशेषणकातीन्द्रियजातिविशेषावच्छिन्नवाचकमनःपदात् शाब्दधीस्तत्र जातित्वादिना जातीविशिष्टे शक्तिग्रहेण प्रमुष्टजातित्वांशं मनस्त्वादिप्रकारकं शक्तिस्मरणं तत्रापि विशेषणांशमोषमन्तरेण गत्यन्तराभावादिति वदन्ति,

विवदन्तेऽप्यत्र बहवः-स्मृतेर्विलक्षणप्रकारतायां संस्कारानुभवयोः प्रयोजकत्वस्योद्बोधकविशेषप्रयोजकतामाश्रित्योच्छेदने वि-

---

विरहस्य स्मृतिविशेषविरहाप्रयोजकत्वं युगपदेव स्वरूपतो घटत्वप्रकारकस्मृतिः, जातित्वादिना च घटत्वप्रकारकस्मृतिश्चोपपद्येतोभयोसामग्रीसत्त्वादिति भावः,

अत एव प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणमिति न्यायसूत्रेण तथैवोक्तं, प्रणिधानादिकन्त्वनुपदं व्याख्यास्यामः, तादृशहेतुताया इति। स्मृतिसंस्कारयोर्विशेष्यहेतुताया इत्यर्थः, किञ्चिद्धर्म्मपुरस्कारेण तद्धर्म्मप्रकारकसंस्कारात स्वरूपतस्तद्धर्म्मप्रकारकस्मरणास्वीकारे दशमुखाद्यवच्छिन्नशरीरवृत्तिजातिविशेषावच्छिन्नवाचकरामरावणादिपदेभ्यः स्वरूपतस्तादृशजात्यवच्छिन्नस्यास्मदाद्यननुभूतत्वेन शक्तिग्रहासम्भवात स्मरणासम्भवेन शाब्दबोधानुदयः स्यादित्याह—कथमन्यथेति। तत्रेति। रामरावणमनःपदादावित्यर्थः, जातित्वादिनेति। शक्तिग्रहेण स्वरूपतः स्मरणद्वारा शक्तिग्रहप्रयोजकतादृशसंस्कारेणेत्यर्थः, तथा च जातित्वावच्छिन्नजातिनिष्ठप्रकारताकेन शक्तिग्राहकसंस्कारेणेत्यर्थः,

एतेन रामादिपदानां जातित्वेन तादृशजात्यवच्छिन्नशक्तिग्राहकाभावात्तादृशशक्तिग्रहासम्भवेऽपि न क्षतिः,

अयम्भावः-जातित्वादिना यत्किञ्चिद्घटत्वादिप्रत्यक्षानन्तरं सामान्यप्रत्यासत्त्या निखिलजातिमद्विषयकानुभवेनोपनयेन जातिविशिष्टानुभवजनिततादृशसंस्कारात् प्रमुष्टजातित्वांशो रामरावणादिशरीरवृत्तिजातिपुरस्कारेण तादृशजातिमद्विषयकः स्मरणात्मकस्तत्तत्पुराण-

शेष्यविशेषणभावांशेऽप्युद्बोधकाविशेषस्यैव नियामकत्वसम्भवात्, प्रकारत्वविशेष्यत्वानन्तर्भावेण सामान्यतस्तद्विषयकस्मृतौ तद्विषयकत्वेनैव संस्कारानुभवयोर्हेतुताऽऽपत्तेः, रावणादिपदेभ्यः लक्षणाया तत्तत्पदार्थत्वादिप्रकारक एवान्वयबोधः,

वस्तुतस्तु—अनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञान-

---

कोषादिभ्यः स्वरूपतस्तादृशजात्यवच्छिन्नः शक्तिग्रहो जायते, तदनन्तरं-तादृशशक्तिग्रहवशात् स्वरूपतस्तादृशजात्यवच्छिन्नस्य स्मरणं शाब्द-बोधश्च भवतीति,

स्वरूपतस्तद्धर्मप्रकारकस्मृतौ स्वरूपतस्तद्धर्मप्रकारकसंस्कार-त्वेन हेतुत्वेऽपि रामरावणादिपदेभ्यः शाब्दबोधमुपपादयति—रावणादीति।

न च रावणादिपदानां शक्त्यग्रहे शक्यसम्बन्धरूपलक्षणाया ग्रहा-सम्भवात् कथं तत्तत्पदार्थत्वादिना शाब्दबोध इति वाच्यम्?

यत् पदं साधु पूर्व्वपूर्व्वैर्व्युत्पन्नैः प्रयुक्तं तत्पदं किञ्चिद्वाचकमिति सामान्यव्याप्त्या तत्तत्पदशक्यत्वग्रहसम्भवाल् लक्षणाग्रहे शक्यताऽव-च्छेदकावगाहनस्यानपेक्षणादिति भावः,

केचिदिदानीन्तनपुरुषे शक्तस्य रामादिपदस्य लक्षणया तादृ-शबोधो भवतीत्याहुः,

तदसद्—रावणदशास्यादिपदस्येदानीन्तनपुरुषे शक्तिग्रहो न यस्य पुरुषस्य जातस्तस्यापि तादृशपदात् पुराणादितः शाब्दबोधजननात्,

ननु सामान्यतस्तद्विषयकस्मृतित्वावच्छिन्नं प्रति तद्विषयकसं-स्कारत्वेन हेतुत्वे घटवद् भूतलमित्यनुभवजन्यतादृशसंस्काराद् घटो-भूतलञ्चेत्याकारकस्मरणापत्तिरनुपपत्तिश्च तादृशविशिष्टस्मरणस्य, प्र-कारताऽऽदेः प्रयोजकत्वाभावात् तत्तदुद्बोधकानां तादृशतादृशविशिष्टस्म-रणजनकत्वेऽनुभवसंस्कारयोः स्मृतित्वावच्छिन्नं प्रति कारणत्वानु-पपत्तिरतो विशिष्टस्मरणं प्रत्येतन्मतेऽपि विशिष्टसंस्कारस्य हेतुत्वमाव-श्यकमित्यालोच्याह—वस्तुतस्त्विति। अनुगतोद्बोधकेति। अनुगतोद्बोधकश्च-सुसमूर्षितचिन्हज्ञानाचित्रादिधर्म्मिकसादृश्यज्ञानादि, व्यक्तञ्चैतत् प्रणि-धाननिबन्धाभ्यासेत्यादिसूत्रे, तत्र च तत्तदर्थविषयकस्मरणं प्रति सु-समूर्षिततत्तदर्थचिह्नज्ञानत्वेन तादृशसादृश्यज्ञानत्वेनानुगतरूपेण हेतु-तया तादृशस्थल उद्बोधकवैलक्षण्यज्ञाने बोधस्य कल्पयितुमशक्यत्व-मिति भावः, स्वरूपत इति। जातित्वादिना गोत्वावच्छिन्ने शक्तिभ्रमस-

सत्त्वे स्वरूपतस्तत्प्रकारकस्मरणापत्त्या तत्र तादृशज्ञानस्य हेतुत्व-मावश्यकमित्यलमतिपल्लवितेन,

अथ सामान्यतो वक्तृबुद्धिविषयताऽवच्छेदकधर्म्मावच्छिन्नस्य सर्व्वनामशक्यत्वे शक्तिभ्रमं विना कालान्तरीणपुरुषान्तरीण—बुद्धिविषयताऽवच्छेदकत्वधर्म्मावच्छिन्नाविषयिका प्रतीतिः सर्व्वनाम्ना न जन्यते;

अपि तु यो यदा यस्य बुद्धिस्थस्तदा तदुच्चरितपदात्तत्प्रकारावच्छिन्नविषयिकैवेति नियमानुपपत्तिः, स्वोच्चारणानुकूलबुद्धि-विषयताऽवच्छेदकावच्छिन्नस्य शक्तिविषयत्वे च स्वपदस्य तत्तद्व्य-क्तिपरतया तत्तत्पदव्यक्तिभेदेन शक्तिभेदप्रसङ्गः, अननुगमाद्व्युत्पत्तिविरोधश्च ।

एवं युष्मदस्मत्पदयोरात्ममात्रे न शक्तिः; अपि तु सम्बो-ध्योच्चारणकर्त्रोरेव, सम्बोध्यताऽवच्छेदकत्वोच्चारयितृताऽवच्छेदकत्व-रूपानुगतधर्म्मोपलक्षितचैत्रात्मत्वादिकमेव प्रवृत्तिनिमित्तमित्यप्यसङ्ग-तं, सामान्यतः सम्बोध्यताऽवच्छेदकत्वादेरनुगमकत्वे चैत्रस्य

---

त्त्वे, स्वरूपत इति। किञ्चिदविशेष्यतयेत्यर्थः,

व्युत्पत्तिविरोधश्चेति । सर्व्वनाम्न एका शक्तिरिति व्युत्पत्तिविरोधश्चे-त्यर्थः, तथा च पूर्वाननुभूतचैत्रत्वादिप्रकारकशाब्दबोधानुपपत्तिरि-ति ध्येयम् ।

युष्मदस्मत्पदयोरप्यनुगतशक्यताऽवच्छेदकं दिदर्शयिषुर्लाघवा-यात्रैव तत्पदद्वयं धारयति—एवं युष्मदिति । आत्ममात्र इति । तयोरा-त्ममात्रशक्तत्वे त्वं गच्छेः; अहं न गच्छेयमिति विधिनिषेधयोरनुपप-त्तिः; उद्देश्यताऽवच्छेदकस्यात्मत्वस्यैक्याद्, आत्मत्वसामानाधिक-रण्येनोभयान्वयसमर्थने त्वं गच्छसीति निश्चयकाले त्वं न गच्छ-सीति प्रतीत्यापत्तेरिति भावः, सम्बोध्येतेति । वक्त्रुच्चरितवाक्यजन्यबो-धावच्छेदकताऽवच्छेदकत्वेन वक्त्रभिप्रायविषयताऽवच्छेदकत्वोपलक्षि-तजात्यवच्छिन्नशरीराविशिष्टात्मत्वम्, उच्चारणानुकूलकृत्यवच्छेदकता-ऽवच्छेदकत्वोपलक्षितजातिमच्छरीरावच्छिन्नात्मत्वञ्च तयोः शक्यता-ऽवच्छेदकमित्यर्थः, चैत्रात्मत्वादिकमेवेति । चैत्रमैत्रतत्तच्छरीरविशेषाव-

यत्पदसम्बोध्यता तस्माद्ध युष्मत्पदात् पदान्तरसम्बोध्यमैत्रादे-श्चैत्रोच्चारितादस्मत्पदात् पदान्तरोच्चारयितुश्च मैत्रादेः प्रतीतिप्रसङ्गो दुर्व्वार इति,

स्वजन्यबोधाश्रयतया प्रयोक्त्रभिप्रायविषयताऽवच्छेदकत्वरूपस्व-सम्बोध्यताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने युस्मत्पदस्य; स्वोच्चारणकर्त्तृत्वावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने चास्मत्पदस्य शक्तेः स्वीकरणीयतया स्वत्वान्तर्भावेणाननुगमतादवस्थ्यादिति चेद्ध ?

न-स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयताकत्वस्वजन्यत्वो-भयसम्बन्धेन तदादिसर्व्वनामपदप्रकारको बोधविषयकसङ्केतोऽभ्यु-पेयते,

---

च्छिन्नात्मत्वमेवेत्यर्थः, सम्बोध्यतेति । तच्च वाक्यजन्यबोधाश्रयत्वेन, मैत्रादेरिति । अत्र षष्ठ्यर्थो विषयित्वं तस्य च प्रतीतिप्रसङ्ग इत्यत्र प्रतीतावन्वयः, स्वजन्येति । स्वपदं युष्मच्छब्दपरं, स्वोच्चारणेति । स्वपदम-स्मच्छब्दपदपरं, स्वोच्चारणेति । स्वपदं तच्छब्दपरम्, उच्चारणञ्च वर्णोद्दे-श्यककृत्यधीनो जनकतावदभिघातसंयोगानुकूलो व्यापारः, शब्दमुच्च-रतीत्यादौ द्वितीयाऽर्थो निरूपितत्वं तस्य च तादृशधात्वर्थघटकजनक-तायामन्वयः, तथा च स्वोच्चारणानुकूला या बुद्धिस्तदीयप्रकारता-वद्धर्म्मावच्छिन्नविषयकत्वमेकः सम्बन्धः, जन्यत्वञ्चापरः,

न चात्र घटोऽस्ति तमानयेत्यादौ वक्त्रा घटादिकं बुद्धिविषयीकृत्य तच्छब्दप्रयोगेऽपि; तदुच्चारणप्रयोजकत्वं कुतो घटज्ञानादौ मन्यत इति वाच्यम् ?

बुबोधयिषाऽधीनवाक्योच्चारणं प्रति वाक्यार्थज्ञानस्य हेतुतया तत्सम्पादकताया घटज्ञानस्य तदुच्चारणप्रयोजकत्वावश्यकत्वादिति,

तदादीति । आदिना त्यच्छब्दपरिग्रहः, अभ्युपेयत इति । उक्तोभयसम्बन्धेन तत्पदवान् बोध इत्याकारको भगवतः सङ्केतः स्वीक्रियते गत्यन्तरविरहादिति भावः,

अत्र तादृशसङ्केतविषयकं कीदृशाकारं ज्ञानं तत्पदजन्यशाब्दबोधे हेतुरिति चेद् ?

अत्र नव्याः-स्वजन्यत्वस्वविशिष्टविषयतावत्त्वोभयसम्बन्धेन तत्पदवान् बोधो भवत्वेतादृशसङ्केत ईश्वरीयः स्वीकार्य्यः, स्वं तत्पदं, स्व-

वैशिष्ट्यञ्च स्वोच्चारणप्रयोजकबोधीयप्रकारतासमानाधिकरणनिरव-च्छिन्नावच्छेदकताकत्वस्वोच्चारणप्रयोजकबुद्धिविषयवृत्तित्वोभयसम्ब-न्धेन,

एवञ्च तत्पदजन्यबुद्धिप्रकारत्वसमानाधिकरणनिरवच्छिन्नप्रकार-ताकविशेष्यताशालिशाब्दं प्रति स्वनिष्ठप्रकारताकबोधत्वावच्छिन्नस-ङ्केतीयविशेष्यतानिरूपितताद्दशोभयत्वावच्छिन्नसंसर्गतानिरूपितवैशि-ष्ट्यनिष्ठसांसर्गिकविषयतानिरूपितोभयत्वावच्छिन्नसांसर्गिकविषयता-कानिष्ठत्वनिष्ठसांसर्गिकविषयताका या निरूपितत्वसम्बन्धावच्छिन्न-विषयता ताद्दशविषयतासम्बन्धेन तत्पदवान् बुद्धिप्रकारावच्छिन्न-एताद्दशसङ्केतज्ञानं हेतुः,

एवम् उक्तसङ्केतीयसांसर्गिकविषयतावत्त्वमेव पदार्थत्वम्, इतरप-दार्थान्वयबोधं प्रत्यपि सङ्केतीयताद्दशविषयताज्ञानं प्रयोजकमिति,

ननु यत्र दोहनयोग्यगवीबुद्ध्या तामानयेति वाक्यं प्रयुक्तवान्; तत्र तच्छब्दस्य शुद्धगोत्वविशिष्टे शक्तत्वज्ञानस्य भ्रमत्वं मा भूत् शक्तिभ्र-माधीनतज्जन्यशुद्धगोत्वप्रकारकशाब्दीयतत्तत्पदजन्यत्ववतत्पदोच्चारणा-नुकूलबुद्धिप्रकारकताऽऽश्रयगोत्वावच्छिन्नविषयतावत्त्वस्य च स-त्त्वादिति,

न च स्वजन्यत्वस्वोच्चारणानुकूलबुद्धिप्रकारतात्वपर्य्याप्त्यधिकर-णधर्मपर्य्याप्तावच्छेदकताकविषयतावत्वोभयसम्बन्धेन पदप्रकारकबो-धविषयकसङ्केतस्यैव प्रयोजकता; तथा च दोहनयोग्यगवीबुद्ध्या प्रयु-क्तस्य तच्छब्दस्यैवोच्चारणप्रयोजकज्ञानीयप्रकारतायाः पर्य्याप्तिश्च दो-हनयोग्यत्वे गोत्वे च वर्त्तते; अतः शुद्धगोत्वे तत्पर्य्याप्त्यधिकरणत्वे-न सङ्केतावगाहिज्ञानस्य भ्रमत्वमेवेति वाच्यम् ?

प्रकारताया व्यासज्यवृत्तित्वाभावेन पर्य्याप्तिसम्बन्धे मानाभा-वाद्, द्वित्वादेस्तु तत्त्वेऽयमेको न द्वावित्यादिविलक्षणप्रतीतेर्मान-त्वादिति चेद् ?

न-स्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकतापर्य्याप्त्यधिकरण-धर्म्मावच्छिन्नविषयतावत्त्वघटितसम्बन्धस्य विलक्षणत्वाद् अवच्छेद-कतायाः पर्य्याप्तेस्तु बहुतरासामञ्जस्यभयेन ग्रन्थकारादिभिः स्वीकारात्,

न चैवमपि यत्र घट इतिमात्रबुद्ध्या वक्त्रा तत्शब्दः प्रयुक्तस्तत्र ताद्दशज्ञानीयविषयताऽवच्छेदकत्वविरहेण ताद्दशनिवेशो न सम्भव-तीति वाच्यम् ?

विशेष्यतायाः प्रकारावच्छिन्नत्वमते तत्र घटनिष्ठविशेष्यताया-

तत्र च स्वपदार्थस्य सम्बन्धाघटकतया तत्तत्पदव्यक्तित्वेन पदानां न विषयता; अपि तु तत्तत्पदत्वादिरूपानुपूर्व्वीविशेषप्रकारेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः,

---

घटत्वेऽवच्छेदकत्वसत्त्वाद्,

वस्तुतस्तु घट इत्याद्याकारकमात्रज्ञानेन न तच्छब्दः प्रयुज्यते; अपि तु घटादिनाऽमुमर्थं साधयामीत्यादिकं मनसि कृत्यैव; तथा च तादृशघटत्वविशिष्टवैशिष्ट्यावगाहिज्ञानीयविषयताऽवच्छेदकत्वसत्त्वेनानुपपत्त्यभावाद्,

नन्वेवमपि स्वोच्चारणानुकूलेत्यादिसम्बन्धे स्वत्वस्य परिचायकत्वेन सामान्यत उच्चारणानुकूलज्ञानीयविषयताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यधिकरणत्वं न घटत्वेऽपि तु पटत्वमठत्वादावपि पटादिकं प्रक्रम्यापि तच्छब्दप्रयोगात्; तथा च कथं तच्छब्देन घटादिमात्रबोध इति चेद् ?

मैवं-सामान्यतो ज्ञानीयविषयताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकाया घटत्वादिसमुदायनिष्ठैकपर्य्याप्तेरसत्त्वेन यत्किञ्चिद्विषयताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्तेरेव संसर्गघटकत्वाद् यत्किञ्चिद्घटद्वयवति सामान्यतो घटद्वयवानिति प्रतीत्या द्वित्वप्रतियोगिकपर्य्याप्तिरिव साक्षात्परस्परासाधारणावच्छेदकतायां निरूपकत्वस्वीकारेण यत्र दण्ड्यादितात्पर्य्येण तच्छब्दप्रयोगस्तत्र तस्य न शक्तिभेदः,

अन्यथा स्वोच्चारणानुकूलबोधविषयताऽच्छेदकताऽवच्छेदकावच्छिन्नावच्छेदताकविषयताऽऽदिघटितसम्बन्धेन वैशिष्ट्यं निवेश्य भिन्नभिन्नशक्तेर्वक्तव्यतया नानाऽर्थताऽऽपत्तिः,

ननु स्वोच्चारणेत्यादौ स्वत्वस्य तत्तद्व्यक्तित्वातिरिक्तस्य दुर्व्वचत्वेन तत्तद्व्यक्तित्वस्य सम्बन्धघटकत्वेऽननुगमतादवस्थ्यमित्यत आह-स्वपदार्थस्येति ।

तथा चोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकावच्छिन्नविषयतावत्त्वजन्यत्वोभयस्यैव संसर्गत्वं, जन्यत्वञ्च स्वनिष्ठान्यथासिद्ध्यनिरूपकत्वे सति स्वाव्यवहितोत्तरत्वरूपं तत्रापि स्वत्वस्य परिचायकत्वेन नाननुगमः, अतिरिक्तं वेति ध्येयम्,

नन्वत्र तादृशसम्बन्धोऽनुगतस्तथाऽपि भगवत्सङ्केतो यदि तत्तत्-

सामान्यतस्तत्पदत्वादिरूपानुपूर्वीविशेषावच्छेदेनैवोभयसम्बन्धावच्छिन्नबोधविषयतानिरूपितसङ्केतप्रकारता ग्राह्येति न व्युत्पत्त्यनुपपत्तिः,

कालान्तरीणपुरुषान्तरीणबुद्धिश्च नेदानीन्तनैतत्पुरुषीयतत्पदादिपदोच्चारणानुकूलेति; तद्विषयताऽवच्छेदकावच्छिन्नबोधे नोपदर्शितोभयसम्बन्धेनैतत्तत्पदादिवैशिष्ट्यम्, अतो नेश्वरेच्छायां तादृशबोधस्यैतत्तदादिपदप्रकारेण भानमिति न कालान्तरीणपुरुषान्तरीणबुद्धिविषयताऽवच्छेदकावच्छिन्नस्यैतत्तदादिपदवाच्यता,

भगवत्सङ्केतीयतत्पदव्यक्तिप्रकारतानिरूपिततथाविधसंसर्गाविषयताऽन्तःपातिबुद्धिविषयताऽवच्छेदकावच्छिन्नविषयताया एव तद्वाच्यतारूपत्वाद्; अतो न भ्रमं विना तदवच्छिन्नबोधः,

तद्धर्म्मावच्छिन्नाविषयताशालिबोधे पदांशे तद्धर्म्मावच्छिन्नाविषयताघटितोक्तोभयसम्बन्धावच्छिन्नाया बोधनिष्ठविशेष्यतानिरूपित-

---

पदत्वरूपेण तत्पदं बोधेऽवगाहते तदाऽवच्छेदकभेदेन सङ्केतविषयताभेदात् शक्तिभेद इति कथं सकलतत्पदशक्तिग्रहः ? इत्यत आह—सामान्यत इति । व्युत्पत्त्यनुपपत्तिः=अपूर्व्वव्यक्तिग्रहानुपपत्तिरिति, एकदोच्चरितघटतात्पर्य्यकतत्पदस्यान्यदोच्चरिततत्पदजन्यपटविषयकबोध एकपुरुषोच्चरितघटतात्पर्य्यकतत्पदस्य पुरुषान्तरोच्चरिततत्पदजन्यार्थान्तरविषयकबोधे तत्पदसत्त्वाभावप्रयोजकसम्बन्धाभावं दर्शयितुं वाच्यत्वापत्तिं वारयति—कालान्तरीणेति ।

वाच्यतारूपत्वादिति । तथा च भगवत्सङ्केतीया या बोधत्वावच्छिन्नविशेष्यताकतत्पदत्वावच्छिन्नप्रकारतानिरूपितपारम्परीणसांसर्गिकविषयतावद्विषयतावत्त्वं तत्पदवाच्यत्वमिति पर्य्यवसितम्,

हेतुरपि शाब्दबोध इच्छीयबोधत्वावच्छिन्नविशेष्यताकजन्यत्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकावच्छिन्नविषयतावत्त्वोभयसम्बन्धावच्छिन्नतत्पदत्वावच्छिन्नस्वनिष्ठप्रकारतानिरूपितोच्चारणत्वावच्छिन्नसांसर्गिकविषयताकानुकूलत्वानिष्ठसांसर्गिकविषयताकबुद्धित्वावच्छिन्नसांसर्गिकविषयताकविषयतात्वावच्छिन्नविषयताकावच्छेदकतात्वावच्छिन्नविषयताकधर्म्मनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नाविषय-

सङ्केतीयप्रकारताया वाचकतारूपायाः प्रकारतया संसर्गतया वा ज्ञानस्य हेतुत्वाद्, अन्यधर्म्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते पदेऽन्यधर्म्मावच्छिन्नविषयताघटितोभयसम्बन्धावच्छिन्नसङ्केतीयप्रकारताया असत्त्वात्; तत्र तदवगाहिज्ञानस्य भ्रमत्वनियमात् ।

युष्मदस्मत्स्थलेऽपीदृश्येव रीतिश्चिन्तनीया ।

---

अथ स्वसम्बोध्ये युष्मदः स्वोच्चारयितरि चास्मदः शक्तौ; "देव्युवाच—मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवता" इत्यादिऋष्यादिवाक्याद् देवीकर्त्तृकमाहिषासुरकर्म्मकघातादिबोधानुपपत्तिस्तत्र देव्युच्चरितत्वस्य महिषासुरसम्बोध्यत्वस्य चाभावाद्, ऋष्यादिकर्तृकसुरथकर्म्मकघातादिबोधस्य च योग्यताभ्रमादापत्तिश्च, ऋष्यादेस्तादृ-

---

ताकविषयतात्वावच्छिन्नसांसर्गिकविषयतावद्विषयतावत्त्वसम्बन्धेन तत्पदप्रकारकघटादिपदार्थविशेष्यकज्ञानम्,

अथ वा तत्पदजन्यतद्धर्म्मावच्छिन्नविषयताशालिशाब्दबोधे स्वनिष्ठविषयतानिष्ठसांसर्गिकविषयतायाः परम्परया निरूपिका या जन्यत्वस्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकावच्छिन्नविषयतावत्त्वोभयत्वावच्छिन्नसांसर्गिकविषयता तन्निरूपकबोधनिष्ठविशेष्यताकतत्पदत्वावच्छिन्नसङ्केतीयप्रकारतासम्बन्धेनार्थप्रकारकपदाविशेष्यकज्ञानमित्यवधेयमित्यलं पल्लवितेन ।

ईदृशरीतिरिति । उक्तानुगमप्रणालीत्यर्थः, सा चाग्रे प्रदर्शनीया ।

---

युष्मदस्मत्पदयोः शक्तिं निर्व्वक्तुमारभते—अथेत्यादि, स्वसम्बोध्ये=स्वघटितवाक्यजन्यबोधाश्रयत्वेन वक्त्रभिप्रेते, स्वं युष्मत्पदम्, अस्य च शक्तावित्यनेनान्वयः, स्वोच्चारयितरि चेति । अत्र स्वपदमस्मच्छब्दपरं, देव्युवाचेति । सुरथराजर्षिणा पृष्टः मेधामहार्षिस्तमुद्दिश्य देवीमाहात्म्यं देवीमहिषासुरयोः संवादं जगाद तत्स्वरूपमित्यर्थः, तत्रेति । तादृशवाक्यघटके युष्मत्पदेऽस्मत्पदे चेत्यर्थः, महिषासुरसम्बोध्यत्वस्य=महिषासुरसम्बोध्यकत्वस्य तादृशवाक्यजन्यबोधाश्रयत्वेन ऋष्यभिप्रेतत्वस्य सुरथ एव सत्त्वादिति भावः,

तादृशपदार्थाप्रसिद्ध्या योग्यताज्ञानस्य प्रमात्वासम्भवादाह—यो-

शवाक्यप्रयोक्तृत्वात् सुरथादेश्च तत्सम्बोध्यत्त्वादिति चेद् ?

न–तत्र तादृशानुपूर्व्वीप्रकारेण सामान्यप्रत्यासत्त्या देव्यादिवाक्यस्यापि ज्ञानाद्देवीमहिषादिषु तादृशवाक्यप्रयोक्तृत्वस्वसम्बोध्यत्वप्रतिसन्धानादेवास्मद्युष्मद्भ्यां देवीमहिषादिप्रतीत्युपपत्तिः,

यदि च तत्र वक्त्रनुवक्तृवाक्ययोर्विभिन्नैवानुपूर्व्वी तदाऽनुवादकवाक्ये तद्व्यक्तित्वादिना विशेषदर्शनेऽप्यानुपूर्वीप्रकारेण देव्युच्चरितत्वभ्रमादेव श्रोतुर्देव्यादिप्रतीतिस्वीकारेणानुपपत्त्यभावाद्,

यत्र च तादृशानुपूर्व्यवच्छेदेनापि विशेषदर्शनं तत्र नेष्यत एव तत्प्रतीतिः,

---

ध्यताभ्रमादिति । समाधत्ते–तत्रेत्यादि । तत्र=मयेत्यादिमहावाक्ये, सप्तम्यर्थो घटकत्वं, तस्य च देव्यादिवाक्यस्येत्यत्रान्वयः, अत्र वाक्यं तत्तत् खण्डवाक्यमतो नानुपपत्तिः, तादृशेति । सुरथादेस्तादृशतादृशानुपूर्व्वीप्रकारेण ऋष्याद्युच्चरितवाक्यश्रावणप्रत्यक्षानन्तरं देवीवाक्यस्य सामान्यलक्षणया ज्ञानम, इतरेषान्तु पुस्तकस्थतत्तद्वर्णचिह्नज्ञानादिनाऽनुभूततत्तद्वर्णस्मरणेन मनसा मत्वादिसामान्यप्रत्यासत्या जायमाननिखिलमादिवर्णज्ञानसहकारेण ऋष्यादिवाक्यज्ञानोत्तरमेकदैव वा देव्यादिवाक्यज्ञानं जायते, ततश्च देव्युच्चरिततादृशवाक्यघटकास्मत्पदोच्चारणकर्तृत्वं देव्यास्तद्घटकयुष्मत्पदसम्बोध्यत्वञ्च महिषासुरादौ प्रतिसन्दधतो निराबाधं तत्र तत्र तत्तत्पदस्य शक्तिज्ञानं सम्भवत्येवेति भावः, भवत्येवं यदि वक्तृदेव्या वाक्यमनुवादकमहर्षिवाक्यञ्चैकानुपूर्व्वीकं स्याद्, विभिन्नानुपूर्व्वीकञ्चेत् का गतिः? इत्यत आह–यदि चेति । विशेषदर्शनेऽपि=देव्युच्चरितवाक्यभेदनिश्चयेऽपि; ऋष्युच्चरितवाक्यमिदं न देव्युच्चरितमित्यादिनिश्चय इति यावद्, आनुपूर्व्वीप्रकारेणेति । मयेत्याद्यानुपूर्व्वीकं किञ्चिद् वाक्यं देव्युच्चरितमित्यादिभ्रमादित्यर्थः, तथा च तत्र तादृशास्मत्पदोच्चारणकर्तृताऽवच्छेदकत्वोपलक्षितात्मत्वावच्छिन्नशक्तिभ्रमादेव शाब्दबोध इति भावः,

तादृशानुपूर्व्यवच्छेदेनापि=मयेत्याद्यानुपूर्व्यवच्छेदेनापि, विशेषदर्शनं=देव्याद्युच्चरितत्वाभावनिश्चयः,

न च यदि देव्युच्चरितवाक्यस्य विभिन्नानुपूर्व्या निश्चयः स्यात्

एवमन्यदीयस्वार्थतात्पर्य्यकोच्चारणानधीनोच्चारणरूपं स्व-तन्त्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकम्,

उक्तस्थल ऋष्याद्युच्चारणञ्च न तथा तस्यार्थप्रतिपादनद्वारा देव्युच्चारणाधीनत्वादिति नास्मत्शब्दादृष्यादिबोधः, स्वातन्त्र्येणाहं-गच्छामीत्युच्चारणस्यापि को गच्छतीत्यादिप्रश्नवाक्यशक्तिग्राहक-

---

तदा ऋषिवाक्ये देव्युच्चरितानुपूर्व्यवच्छिन्नवाक्यभेदनिश्चयो भवितुम-र्हति; स चास्माकं श्रोतुर्वाऽसम्भवीति कुतो विशेषदर्शनमिति वाच्यम्?

श्रोतुश्च कथञ्चित् सम्भवात्, अस्माकञ्च; तद्बोधकवाक्यान्तरघ-टितपुराणान्तरदर्शने तत्संशयसम्भवाच्च पुराणादिवाक्यविभिन्न-कालिदासाद्युच्चरितवाक्ये तादृशबाधनिश्चयोदयाच्चेति,

ननूक्तरीत्याऽनुपपत्तिवारणेऽपि तत्रस्थास्मदादिपदेन ऋष्यादेर्बोधो-दुर्व्वार इत्यत आह–एवमिति । यत्र स्वीयगमनप्रतिपादनेच्छया मैत्रे-णाहं गच्छामीत्युक्तौ सम्यगश्रुतवता चैत्रेण किमित्युक्तमिति जिज्ञासि-तेन मैत्रेणाहं गच्छामीति पुनरुक्तं, तत्र स्वतन्त्रोच्चरितास्मत्पदेऽव्या-प्तिवारणाय—अन्यदीयेति । अन्यदीयं प्रकृतास्मत्पदोच्चारणकर्त्तृभिन्न-कर्त्तृकं यत् स्वार्थतात्पर्य्यकोच्चारणं; तच्च प्रकृतास्मत्पदघटितवाक्य-जन्यबोधाश्रयत्वेनेच्छाप्रयोज्योच्चारणं, तादृशञ्च प्रकृते देव्युच्चारणं-तदधीनोच्चारणं प्रकृते ऋष्यादिकर्त्तृकं तद्भिन्नमित्यर्थः,

अस्मत्पदेति । स्वीयान्यदीयस्वार्थतात्पर्य्यकोच्चारणानधीनोच्चा-रणकर्त्तृत्वोपलक्षितात्मत्वावच्छिन्ने शक्तिः स्वतन्त्रोच्चरितास्मत्पद-स्येति भावः,

न च ऋष्याद्युच्चरितास्मत्पदस्य शक्त्यभावेन स्वार्थतात्पर्य्यस्यैवा-सम्भवात् कुतस्तद्घटितस्योपलक्षणत्वमिति वाच्यम्?

अन्यदीययादृशार्थतात्पर्य्यकवाक्योच्चारणं तादृशतात्पर्य्यविष-यार्थातिरिक्तार्थतात्पर्य्यकत्वाभावे सति तादृशोच्चारणाधीनं यदुच्चा-रणं तदन्यदित्यर्थ एव पर्य्यवसानाद्,

वस्तुतस्त्वस्वतन्त्रोच्चरितैष्यादिवाक्यघटकास्मत्पदस्यापि स्वघ-टितवाक्यार्थकर्म्मकवाक्यान्तरस्थक्रियाकर्त्तृत्वोपलक्षितवाचकतया ऋ-षिकविप्रभृतिभिरुच्चरिततद्घटितवाक्यस्यापि स्वार्थतात्पर्यसत्त्वात्,

स्वार्थतात्पर्य्यकेत्यस्य व्यावृत्तिमाह, स्वातन्त्र्येणेति । अन्योच्चारणा-

वाक्योच्चारणाधीनतया स्वार्थपरत्वमुच्चारणविशेषणम् , प्रश्नवाक्यस्य चाहं गच्छामीत्यादिप्रकृतवाक्यतात्पर्य्यविषयपरत्वाभावात्तदुच्चारणे विशिष्टव्यतिरेकः सुघटः,

आनुपूर्व्या सजातीयं यद्वा वाक्यान्तरं तदुच्चारणानधीनत्वञ्च निवेशयितुमशक्यं, शब्दानुकरणस्थल एव समानानुपूर्वीकोच्चारणापेक्षानियमाद्,

वाक्यार्थानुवादस्थले समानार्थकवाक्यमात्रोच्चारणापेक्षणात् स्वातन्त्र्यापत्तेर्दुर्व्वारत्वाद्,

वस्तुतस्तु वाक्यान्तरस्थक्रियाकर्म्मताऽऽपन्नस्वघटितवाक्यार्थप्रत्यायनेच्छाऽनधीनं स्वोच्चारणमेव स्वतन्त्रोच्चारणम् ,

अनुवादस्थले चेत्युवाचेतिवाक्यान्तरस्थोक्तिक्रियाकर्म्मतया त-

---

नधीनतयेत्यर्थः, असमानानुपूर्व्वीकवाक्योच्चारणाधीने तद्व्यावृत्तिं दर्शयित्वा समानानुपूर्व्वीकवाक्योच्चारणेऽपि तद्व्यावृत्तिमाह—शक्तिग्राहकवाक्येति । मया गन्तव्यं पश्चात् त्वयेत्यादिवाक्यमुच्चारितन्ततस्तादृशगमनादिदर्शनेनास्मच्छब्दस्योच्चारयितरि शक्तिं गृहीतवतो मया गन्तव्यमिति वाक्योच्चारणस्य तादृशसमानानुपूर्वीकशक्तिग्राहकवाक्योच्चारणाधीनतयेत्यर्थः । आनुपूर्व्येति । अत्र तृतीयाऽर्थोऽभेदस्तस्य सजातीयैकदेशे साजात्येऽन्वयः, शब्दानुकरणस्थल एवेति । शब्दानुवादस्थल एवेत्यर्थः, एवकारेणार्थानुवादस्थलव्यवच्छेदः, शब्दानुवादस्तु पूर्व्ववाक्यसमानानुपूर्वीकसमानार्थकवाक्यं,-पूर्व्ववाक्यार्थस्य शब्दान्तरेण पुनर्व्वचनमर्थानुवादः,

वक्ष्यमाणदोषभिया पूर्व्वकल्पं परित्यज्य कल्पान्तरमाह—वस्तुतस्त्विति । वाक्यान्तरस्थेति । स्वघटितवाक्यभिन्नवाक्यघटकेत्यर्थः, स्वमस्मत्पदं, स्वघटितवाक्यभिन्नत्वञ्च स्वघटितवाक्यजन्यताऽवच्छेदकमुख्यविशेष्यताभिन्नमुख्यविशेष्यताशालिशाब्दबोधजनकवाक्यत्वं,-नातः शाब्दबोधौपयिकाकाङ्क्षावत्पदसमूहरूपवाक्यभेदस्य प्रत्येकं पदे सत्त्वेऽपि स्वस्मिन् तादृशवाक्यान्तरत्वं, समानाकारकज्ञानीयविषयताया ऐक्येन न भिन्नभिन्नज्ञानमादाय तद्दोषः, क्रियाकर्म्मताऽऽपन्नेति । तादृशक्रियाकर्म्मत्वनिष्ठप्रकारतानिरूपितस्वघटितवाक्यार्थविशेष्यताकोयः प्रत्ययस्तज्जननेच्छाऽनधीनमित्यर्थः, अनुवादेति । ऋष्याद्युच्चरिते

दर्थघटितवाक्यार्थं प्रतिपादयितुमेवानुवादकोऽस्मद्घटितं वाक्यं प्रयुङ्क्ते इति न स्वातन्त्र्यम्,

मत्पुत्रम्पश्येत्यादौ प्रकृतवाक्यस्थज्ञानरूपक्रियाकर्म्मतया स्वं प्रतिपादयितुमेवास्मदः प्रयोगात् तदुच्चारणस्य स्वातन्त्र्यनिर्व्वाहाय वाक्यान्तरस्थेति,

एतेन यत्र चैत्रेणान्यदीयाच्चैत्रः सुन्दर इत्यादि वाक्यादेव वाक्यार्थं प्रतीत्याहं सुन्दर इति प्रयुज्यते; तत्र स्वसमानार्थकवाक्योच्चारणसापेक्षत्वेऽपि न स्वातन्त्र्यक्षतिः,

न वा स्वपाण्डित्याभिमानिमौनिपुरुषज्ञानपरस्यायमहं पण्डित इति जानातीत्यन्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिः,

अथैवं रीत्याऽव्यवहितोक्तस्थलेऽहंपदेनोच्चारयितृपुरुषविषयक-

---

मया त्वयि हत इत्यादिस्थले चेत्यर्थः, तदर्थघटितेति । अस्मत्पदार्थघटितेत्यर्थः, प्रतिपादयितुं=प्रतिपादनेच्छयेत्यर्थः । स्वातन्त्र्यमिति । तदुच्चारणस्येति शेषः,

ननु क्रियाकर्म्मताऽऽपन्नेत्यादिनिवेशेनैवोपपत्तौ वाक्यान्तरस्थेति कथम्? इत्यत आह—मत्पुत्रं पश्येति । प्रकृतवाक्यस्थेति । अस्मत्पदघटितवाक्यस्थेत्यर्थः, वाक्यान्तरस्थेतीति। तथा च पश्येत्यस्यास्मत्पदघटितवाक्यजन्यास्मत्पदार्थघटितार्थबोधजनकत्वाद् न वाक्यान्तरघटकत्वमिति,

एतेनेति । वस्तुतस्त्वित्यादिकल्पादरेणेत्यर्थः, वाक्यार्थम्=अभेदेन सुन्दरान्वितस्वात्मानं, प्रतीत्य=ज्ञात्वा, प्रयुज्यत इति । तथा चाहं सुन्दर इति वाक्यप्रयोगस्य प्रयोजकवाक्यार्थज्ञानजननद्वाराऽन्यदीयताद्दशवाक्योच्चारणप्रयोज्यत्वस्याक्षतेरिति भावः,

पूर्व्वकल्पेऽनुपपत्तिं दर्शयित्वाऽऽपत्तिं दर्शयति—न वेति। अस्य स्वातन्त्र्यापत्तिरित्यनेनान्वयः, अस्मत्पदार्थमौनिपुरुषे ताद्दशज्ञानसत्त्वज्ञापनाय स्वपाण्डित्याभिमानीति, वक्तुः पाण्डित्याभिमानिपुरुषीयवाक्यादेव ज्ञात्वा ताद्दशवाक्योच्चारणञ्चेद्? न तदापत्तिरतस्तदसम्भवप्रदर्शनाय—मौनीति । अत्र चाहं पण्डित इत्येकं वाक्यं पण्डिताभिन्नाहमित्यर्थकम्, अपरञ्चायमिति जानातीति, इतिशब्दोऽत्र ताद्दशवाक्यार्थपरस्तथा च पण्डिताभिन्नास्मत्पदार्थकर्म्मकज्ञानवानयमित्यर्थः,

आशङ्कते—अथैवमिति । अव्यवहितेति । स्वपाण्डित्येत्यत्राभिमानिनः

प्रतीतिवारणेऽप्यभिमानिनस्तेन प्रत्ययो दुरुपपाद एव तस्योच्चारणाभावेनास्मदवाच्यत्वादिति चेत् ?

सत्यं; स्वतन्त्रोच्चारयितुः सर्व्वत्रास्मदर्थत्वे स्यादेवेयमनुपपत्तिः, तदेव न; स्वतन्त्रोच्चारितास्मत्पदस्यैव तद्वाचकत्वाद्, निरुक्तस्वतन्त्रोच्चारणरहितस्य चास्मदः स्वघटितवाक्यार्थकर्म्मकवाक्यान्तरस्थक्रियाकर्त्तर्य्येव शक्तिः,

एवञ्च मया त्वयि हतेऽत्रैवेत्यादौ तादृशक्रिया=देव्युवाचेतिवाक्यान्तरस्थोक्तिक्रियैव; तत्कर्त्तृत्वं देव्या इति पूर्वोक्तभ्रमं विनाऽ-

---

पुरुषस्येति यावत्, तेन=अस्मच्छब्देन, अवाच्यत्वादितीति । स्वतन्त्रोच्चारयितर्य्येवास्मत्पदस्य शक्तत्वादिति भावः,

स्वतन्त्रोच्चरितास्वतन्त्रोच्चरितभेदेन द्विविधास्मत्पदस्य शक्तेर्द्वैविध्यं कल्पयित्वा समाधत्ते–सत्यमित्यादि । स्वतन्त्रोच्चरितेति । वाक्यान्तरस्थक्रियाकर्म्मतया स्वघटितवाक्यार्थप्रतिपादनेच्छाऽनधीनोच्चारणकर्मास्मत्पदस्यैवेत्यर्थः, तद्वाचकत्वादिति । वाक्यान्तरस्थक्रियाकर्म्मतया स्वघटितवाक्यार्थप्रतिपादनेच्छाऽनधीनोच्चारणकर्त्तृत्वोपलक्षितात्मवाचकत्वादित्यर्थः, निरुक्तेत्यादेः वाक्यान्तरस्थक्रियाकर्म्मतया स्वघटितवाक्यार्थप्रतिपादनेच्छाऽधीनोच्चारणकर्म्मास्मत्पदस्येत्यर्थः, पूर्व्वोक्तभ्रमं विनाऽपि=ऋष्याद्युच्चरितमयात्वयीत्याद्यानुपूर्व्यबच्छिन्नवाक्ये देव्युच्चरितत्वभ्रमं विनाऽपीत्यर्थः,

एवं "मया त्वमाप्थाः शरणं भयेष्वि"त्यादिभाट्टिकाव्यादिवाक्ये विश्वामित्राद्युच्चरितत्वाभावनिश्चयस्य विशेषदर्शिनां सदा सत्त्वेऽपि तद्घटकास्मच्छब्दादिना न विश्वामित्रादेर्बोधानुपपत्तिरिति, ऊच इति वाक्यान्तरक्रियाकर्त्तृत्वाद्, अत एव "किमसुभिर्ग्लपितैर्जड ! मन्यसे मयि निमज्जतु भीमसुतामनः" इत्यादावपि सप्तम्यन्तास्मच्छब्देनापि "इति मन्यसे" इति वाक्यान्तरस्थक्रियाकर्त्तुश्चन्द्रादेरपि बोधोदयः,

नन्वेवमपि शुम्भासुरं प्रति देव्युच्चरितस्यैकैवाहमित्यादेः मय्येव विशन्त्यस्मद्विभूतय इत्यन्तस्य चास्मत्पदघटितवाक्यस्योच्चारणे; इति त्वं पश्येति वाक्यान्तरस्थदर्शनक्रियाकर्म्मतया तादृशास्मत्पदघटितवाक्यार्थप्रतिपादनेच्छाऽधीनतया स्वातन्त्र्यविरहेण तत्रस्थास्मत्पदस्य देवीबोधकतया अनुपपत्तिः, आपत्तिश्च वाक्यान्तरस्थदर्शनक्रियाकर्त्तुः शुम्भासुरस्य प्रतीतेः,

पि तत्प्रतीतिरुपपादयितुं शक्यते, स्वघटितवाक्यार्थकर्म्मकवाक्यान्तरस्थक्रियात्वञ्च तादृशार्थकर्म्मकत्वेन वाक्यान्तरप्रतिपाद्यत्वं, तेनाहं पण्डित इति विद्वांसं पश्येत्यादौ दर्शनादिक्रियाया अस्मच्छब्द-

न च तादृशवाक्यस्यानुवादकमहर्ष्युच्चरिततया तद्घटकास्मच्छब्दस्य देवीत्युवाचेतिवाक्यान्तरस्थकथनक्रियाकर्त्र्या देव्या बोधकत्वं नानुपपन्नमिति वाच्यम् ?

तद्वाक्यस्य ऋष्युच्चरितत्वेऽपि तत्समानानुपूर्व्वीकस्य तत्समानार्थकविभिन्नानुपूर्व्वीकस्य वा वाक्यस्य देव्युच्चरितत्वेन तत्र तद्दोषस्य दुर्व्वारत्वादिति चेद् ?

न-यस्मात् पश्येतिदर्शनक्रियायां तादृशपरस्परोपश्लिष्टवाक्यार्थकर्म्मकत्वान्वये न तात्पर्य्यम्; अपि तु स्वसजातीयद्वितीयरहितभगवत्याः कर्म्मतया भगवत्यां शक्तीनां प्रवेशनक्रियाया वा तत्र कर्म्मतयाऽन्वयतात्पर्य्यम्,

एवञ्च तादृशवाक्योच्चारणस्य वाक्यान्तरस्थाक्रियाकर्म्मत्वेनास्मत्पदघटिततादृशवाक्यार्थप्रतिपादनेच्छाऽधीनत्वमेव नास्ति; अतस्तत्र स्वतन्त्रोच्चरित एवास्मच्छब्दः, अहं पण्डित इति त्वं जानीहीतिवक्तृतात्पर्य्यकास्मत्पदघटितवाक्यस्थले तु वक्तुः प्रतीतिः स्वयमग्र उपपादयिष्यते,

ननु स्वघटितवाक्येत्यत्र क्रियापदेन धात्वर्थो वाच्यः; तत्र वाक्यान्तरस्थत्वं न वाक्यान्तरघटकत्वं तत्र तदभावाद्, धात्वर्थैकदेशे धातावन्वयासम्भवाच्च,

एवमहं पण्डित इत्ययं जानातीत्यत्रेतिजानातीतिवाक्यान्तरस्थज्ञानक्रियाकर्त्तुरभिमानिपण्डितस्येव स पण्डित इति देवदत्तोऽपि जानातीति तादृशवाक्यार्थकर्म्मताऽऽपन्नज्ञानक्रियाकर्त्तुर्देवदत्तस्याप्यस्मच्छब्देन बोधापत्तिर्दुर्व्वारेत्यत आह—स्वघटितवाक्येति ।

अत्र क्रियेति सम्पातायातम्, अन्यथा प्रतिपाद्यत्वमित्यन्तव्याख्याया असङ्गतेः, प्रतिपाद्यत्वमित्यन्तस्य वा प्रतिपाद्यक्रियात्वमर्थः, तादृशार्थकर्म्मकत्वेनेति । अस्मत्पदघटितवाक्यार्थकर्मकत्वनिष्ठप्रकारतानिरूपितवाक्यान्तरजन्यप्रतिपत्तीयविशेष्यत्वं, न तु स्वघटितवाक्यार्थकर्म्मकत्वनिष्ठविषयताशालिवाक्यान्तरजन्यप्रतिपत्तीयविषयत्वं साक्षात्परम्परासाधारणतादृशविषयतानिरूपितविषयत्वं वेति त्वर्थतो लब्धं, तेन= उक्तार्थकरणेन, विद्वांसमिति । जानन्तमित्यर्थः,

घटितवाक्यार्थविषयकत्वसम्भवेऽपि तेन रूपेण समभिव्याहृतवाक्यान्तराप्रतिपाद्यतया न तत्क्रियाकर्त्तुरस्मच्छब्दतः प्रतीतिः,

अथ—इतिपदघटितवाक्यान्तरात् क्रियाप्रतिपत्तावेव तत्कर्त्तुर्वाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वं सुग्रहं; तद्ग्रह एव च तद्घटितानुगमकरूपग्रहेणास्मच्छब्दशक्तिग्रहेऽस्मच्छब्दघटितवाक्याद् वाक्यार्थप्रतीतौ तस्येतिपदादुपस्थित्या वाक्यान्तरात् क्रियाप्रतिपत्तिरित्यन्योन्याश्रय इति चेद् ?

---

आशङ्कते—अथेति । इतिपदघटितेति । देवी महिषासुरमित्युवाचेति वाक्यान्तरादित्यर्थः, क्रियेति । उक्त्यादिक्रियाशाब्दबोध एवेत्यर्थः, तादृशवाक्यार्थकर्म्मकत्वेन क्रियायाः शाब्दबोध इति यावत्, तत्कर्त्तुः=उक्त्यादिक्रियाकर्त्तुः, वाक्यान्तरेति । तादृशकर्त्तृत्वरूपो विशिष्टो धर्म्मः, सुग्रहमिति । ग्रहविषयो भवतीत्यर्थः । तद्ग्रह एवेति । इतिपदघटितवाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वग्रहे सत्येवेत्यर्थः, तद्घटितानुगमकरूपग्रहेण=वाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वोपलक्षितात्मत्वादिधर्म्मग्रहेणेत्यर्थः, अत्र तृतीयाऽर्थः प्रयोज्यत्वं, तस्य चास्मच्छब्दशक्तिग्रह इत्यनेनान्वयः, अस्मच्छब्दशक्तिग्रहस्य तादृशधर्म्मविशिष्टवैशिष्ट्यावगाहितया तज्ज्ञानस्य तत्र हेतुत्वाक्षतेः, अस्मच्छब्दघटितेति । मया त्वयीत्यादिवाक्याद्, वाक्यार्थेति । देवीकर्त्तृकमहिषासुरकर्म्मकहननोत्तरंशीघ्रं भविष्यद्वर्जनकर्त्तृत्वापन्नदेवतारूपार्थप्रतीतावित्यर्थः, तस्य=तादृशवाक्यार्थस्य, उपस्थित्या=शक्त्या स्मरणेन; इतिशब्दस्य संनिहितबुद्धिस्थ एव शक्तत्वादिति भावः, अन्योन्याश्रय इति । अस्मच्छब्दशक्तौ तद्ग्रहमपेक्षमाणो यस्तादृशवाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वग्रहस्तमपेक्षमाणो यः स्वस्य शक्तिग्रहस्तद्विषयत्वेनास्मत्पदशक्तिर्यदि स्वग्रहसापेक्षग्रहसापेक्षग्रहिका स्यात् तदा स्वभिन्ना स्यादित्यापत्तिरित्यर्थः,

ननु मया त्वयि हतेऽत्रैवेत्यादिवाक्यस्यास्मत्पदघटिततया तादृशवाक्यजन्यप्रतीतेरस्मत्पदशक्तिग्रहाधीनत्वमस्त्येव, तादृशवाक्यार्थपरेतिपदघटितवाक्यान्तरजन्यप्रतिपत्तेरपि तदधीनत्वं सम्भवति, किन्तु तादृशवाक्यार्थकर्म्मकत्वप्रकारताकवाक्यान्तरजन्यप्रतिपत्तिबिषयत्वेन क्रियाया ज्ञाने तदधीनत्वं कुतो मन्यत इति चेद् ?

न—तादृशक्रियाज्ञानेऽपीतिशब्दार्थास्मत्पदघटितवाक्यार्थस्य विशेषणतया भानेन तत्र तादृशविशेषणापेक्षत्वेन विशेषणज्ञानस्य त्व-

न-वाक्यान्तरप्रतिपाद्यतया वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात्, प्रतिपत्तेः पूर्व्वमपि प्रकारणादिना तादृशवक्तृबुद्धेर्ग्रहसम्भवेनान्यान्योऽश्रयाभावात्,

---

स्मत्पदशक्तिग्रहाधीनत्वेन तादृशक्रियाज्ञानस्यापि तच्छक्तिग्रहाधीनत्वाक्षतेः, एवमितिपदघटितवाक्यजन्यप्रतीतेरपि तादृशज्ञानविषयत्वेन तादृशविषयसम्पादनद्वारा तदधीनत्वस्य तत्र सत्त्वाच्चेति निगर्व्वः,

समाधत्ते—वाक्यान्तरेति। अस्मत्पदघटितवाक्यार्थकर्म्मकत्वनिष्ठप्रकारताकवाक्यान्तरजन्यप्रतिपत्तीयविषयताप्रकारताकवक्तृज्ञानीयविषयताऽऽपन्नक्रियाकर्त्तर्यस्मत्शब्दस्य शक्तिरिति भावः,

वक्तुस्तादृशज्ञानञ्च-बुबोधयिषया वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य कारणतया बुबोधयिषायाः कारणेष्टसाधनताज्ञानस्य धर्मिताऽवच्छेदकज्ञानविषया वा देवीकर्त्तृकमहिषासुरकर्म्मकहननोत्तरकालीनशीघ्रभविष्यद्गुगर्जनकर्त्तृतावद्देवताकर्म्मकत्वनिष्ठप्रकारतानिरूपिता सती देवीकर्तृकत्वनिष्ठविशेष्यतानिरूपिता येतिपदघटितवाक्यजन्यप्रतिपत्तीयविषयता तद्वत्युक्तिक्रियेत्याकारकम्,

ननु तादृशार्थकर्म्मकत्वनिष्ठविषयतानिरूपितकथनक्रियानिष्ठविषयतानिरूपितकृतिनिष्ठविषयतानिरूपितदेवीनिष्ठविशेष्यताशालिज्ञानं तादृशवाक्यजन्यं भवत्वित्याकारिकेच्छैव तत्र बुबोधयिषा वाच्या;

एवञ्च तादृशज्ञानं तादृशवाक्यजन्यमित्याकारकं वक्तुर्ज्ञानमपि तादृशतात्पर्य्यप्रयोजकं वाच्यं, कुतस्तादृशज्ञानमादायोक्तानुगमकधर्मः सम्पादनीय इति चेद्?

न-विनिगमनाविरहेणोक्तबुबोधयिषाद्वयमेव हेतुः कल्प्यते, अत उक्तज्ञानस्यापि तत्र सम्भवादिति भावः, तादृशवाक्योच्चारणं प्रत्युक्तबुबोधयिषायाः कारणत्वस्याप्रामाणिकत्वेन तादृशज्ञानस्य नियतसत्त्वाभावमालोक्य स्वघटितवाक्येत्यादिना पर्य्यवसितार्थस्योक्तत्वाच्चेति भावः,

प्रकरणादिनेति। तथा च तादृशशाब्दबोधात् पूर्व्वं सैन्धवमानयेत्यादाविव प्रकरणादिलिङ्गज्ञानादिना तादृशविशिष्टार्थविषयकवक्तृज्ञानविषयकज्ञानजनने बाधकाभावादित्यर्थः,

अन्योन्याश्रयाभावादिति। वाक्यान्तरजन्यप्रतिपाद्यतया तादृशविशिष्टार्थविषयवक्तृज्ञानजनने श्रोतुरपि तादृशज्ञानविषयकज्ञानजनने पूर्व्वंतादृशवाक्यजन्यप्रतिपत्तेः, तज्जनकास्मत्पदस्य शक्तिग्रहस्य चान-

स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यान्तर-प्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयताऽवच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकमिति तु सारम्,

एवञ्च बुद्धिविषयताऽवच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्व-प्रवादोऽपि सङ्गच्छते,

उच्चारणकर्तृत्वानुगमकशरीरेऽपि मिश्राणां बुद्धिस्थत्वनिवेश-बीजन्तु नावधारयामः,

एवं युष्मत्पदप्रवृत्तिनिमित्तानुगमकगर्भनिविष्टं स्वसम्बोध्य-त्वमपि वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वम्, अनुवादकपुरुषीयवा-

---

पेक्षणाद् वाक्यजन्यत्वप्रतिपत्त्यादीनां खण्डश उपस्थित्यैव तादृश-विशिष्टज्ञानसम्भवादिति भावः, स्वघटितवाक्यार्थेति । स्वघटितवाक्या-र्थकर्मकत्वनिष्ठविषयतानिरूपितक्रियानिष्ठविषयतानिरूपितकर्तृत्वनि-ष्ठविषयतानिरूपिता या वाक्यान्तरजन्यप्रतिपत्तिविषयता तत्प्रकार-तानिरूपितवक्तृबुद्धीयविषयताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नम-स्मत्पदशक्यताऽवच्छेदकमित्यर्थः, सारमिति । निर्दोषत्वेन तदेवानुगम-कमित्यर्थः,

एवञ्च=वाक्यान्तरप्रतिपाद्यतया वक्तृबुद्धिविषयत्वस्यानुगमकश-रीरे प्रवेशे चेत्यर्थः,

उच्चारयितृत्वावच्छेदकधीप्रकारावच्छिन्नेऽहम्पदस्य शक्तिरिति मि-श्रोक्तमाक्षिपति—उच्चारणकर्तृत्वेति । एवमिति । मया त्वयीत्यादावस्मत्-पदेन तदुच्चारकमहर्षिबोधवारणायोक्तनिवेशवत् तद्घटकयुष्मत्पदेन ऋषिसम्बोध्यसुरथराजबोधवारणायैतादृशविषयत्वं वाच्यमित्यर्थः, यु-ष्मत्पदेत्यादि, अत्र विषयत्वमित्यनन्तरं वाच्यमिति पूरणीयम्,

अनुगमकेति । स्वसम्बोध्यताऽवच्छेदकेत्यर्थः, गर्भेति । घटकेत्यर्थः, वाक्यान्तरस्थेति । वाक्यान्तरस्थक्रियाकर्म्मत्वनिष्ठविषयतानिरूपितस्व-घटितवाक्यार्थनिष्ठविषयताशून्या या स्वघटितवाक्यजन्यप्रतीतिमत्त्व-प्रकारेच्छा तद्विशेष्यत्वमित्यर्थः, एतादृशसम्बोध्यताऽवच्छेदकत्वं स्वत-न्त्रोच्चरितयुष्मत्पदस्य प्रवृत्तिनिमित्तानुगमकं, स्वमनुवादकानुच्चरि-तयुष्मत्पदम्, अत्र चानुवादकर्षेरिच्छा च मया त्वयीत्यादिवाक्या-

न–वाक्यान्तरप्रतिपाद्यतया वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात्, प्रतिपत्तेः पूर्व्वमपि प्रकारणादिना तादृशवक्तृबुद्धेर्ग्रहसम्भवेनान्यान्योऽश्रयाभावात्,

---

स्मत्पदशक्तिग्रहाधीनत्वेन तादृशक्रियाज्ञानस्यापि तच्छक्तिग्रहाधीनत्वाक्षतेः, एवमितिपदघटितवाक्यजन्यप्रतीतेरपि तादृशज्ञानविषयत्वेन तादृशविषयसम्पादनद्वारा तदधीनत्वस्य तत्र सत्त्वाच्चेति निगर्व्वः,

समाधत्ते—वाक्यान्तरेति। अस्मत्पदघटितवाक्यार्थकर्म्मकत्वनिष्ठप्रकारताकवाक्यान्तरजन्यप्रतिपत्तीयविषयताप्रकारताकवक्तृज्ञानीयविषयताऽऽपन्नक्रियाकर्त्तर्यस्मत्शब्दस्य शक्तिरिति भावः,

वक्तुस्तादृशज्ञानञ्च–बुबोधयिषया वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य कारणतया बुबोधयिषायाः कारणेष्टसाधनताज्ञानस्य धर्मिताऽवच्छेदकज्ञानविधया वा देवीकर्त्तृकमहिषासुरकर्म्मकहननोत्तरकालीनशीघ्रभविष्यद्गर्जनकर्त्तृतावद्देवताकर्म्मकत्वनिष्ठप्रकारतानिरूपिता सती देवीकर्तृकत्वानिष्ठाविशेष्यतानिरूपिता येतिपदघटितवाक्यजन्यप्रतिपत्तीयविषयता तद्वत्युक्तिक्रियेत्याकारकम्,

ननु तादृशार्थकर्म्मकत्वनिष्ठविषयतानिरूपितकथनक्रियानिष्ठविषयतानिरूपितकृतिनिष्ठविषयतानिरूपितदेवीनिष्ठविशेष्यताशालिज्ञानं तादृशवाक्यजन्यं भवत्वित्याकारिकेच्छैव तत्र बुबोधयिषा वाच्या;

एवञ्च तादृशज्ञानं तादृशवाक्यजन्यमित्याकारकं वक्तुर्ज्ञानमपि तादृशतात्पर्य्यप्रयोजकं वाच्यं, कुतस्तादृशज्ञानमादायोक्तानुगमकधर्मः सम्पादनीय इति चेद् ?

न–विनिगमनाविरहेणोक्तबुबोधयिषाद्वयमेव हेतुः कल्प्यते, अत उक्तज्ञानस्यापि तत्र सम्भवादिति भावः, तादृशवाक्योच्चारणं प्रत्युक्तबुबोधयिषायाः कारणत्वस्याप्रामाणिकत्वेन तादृशज्ञानस्य नियतसत्त्वाभावमालोक्य स्वघटितवाक्येत्यादिना पर्य्यवसितार्थस्योक्तत्वाच्चेति भावः,

प्रकरणादिनेति। तथा च तादृशशाब्दबोधात् पूर्व्वं सैन्धवमानयेत्यादाविव प्रकरणादिलिङ्गज्ञानादिना तादृशविशिष्टार्थविषयकवक्तृज्ञानविषयकज्ञानजनने बाधकाभावादित्यर्थः,

अन्योन्याश्रयाभावादिति। वाक्यान्तरजन्यप्रतिपाद्यतया तादृशविशिष्टार्थविषयवक्तृज्ञानजनने श्रोतुरपि तादृशज्ञानविषयकज्ञानजनने पूर्व्वं तादृशवाक्यजन्यप्रतिपत्तेः, तज्जनकास्मत्पदस्य शक्तिग्रहस्य चान-

स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यान्तर-प्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयताऽवच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकमिति तु सारम्,

एवञ्च बुद्धिविषयताऽवच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्व-प्रवादोऽपि सङ्गच्छते,

उच्चारणकर्तृत्वानुगमकशरीरेऽपि मिश्राणां बुद्धिस्थत्वनिवेश-बीजन्तु नावधारयामः,

एवं युष्मत्पदप्रवृत्तिनिमित्तानुगमकगर्भनिविष्टं स्वसम्बोध्य-त्वमपि वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वम्, अनुवादकपुरुषीयवा-

---

पेक्षणाद् वाक्यजन्यत्वप्रतिपत्त्यादीनां खण्डश उपस्थित्यैव तादृश-विशिष्टज्ञानसम्भवादिति भावः, स्वघटितवाक्यार्थेति । स्वघटितवाक्या-र्थकर्मकत्वनिष्ठविषयतानिरूपितक्रियानिष्ठविषयतानिरूपितकर्तृत्वनि-ष्ठविषयतानिरूपिता या वाक्यान्तरजन्यप्रतिपत्तिविषयता तत्प्रकार-तानिरूपितवक्तृबुद्धीयविषयताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नम-स्मत्पदशक्यताऽवच्छेदकमित्यर्थः, सारमिति । निर्दोषत्वेन तदेवानुगम-कमित्यर्थः,

एवञ्च=वाक्यान्तरप्रतिपाद्यतया वक्तृबुद्धिविषयत्वस्यानुगमकश-रीरे प्रवेशे चेत्यर्थः,

उच्चारयितृत्वावच्छेदकधीप्रकारावच्छिन्नेऽहम्पदस्य शक्तिरिति मि-श्रोक्तमाक्षिपति—उच्चारणकर्तृत्वेति । एवमिति । मया त्वयीत्यादावस्मत्-पदेन तदुच्चारकमहर्षिबोधवारणायोक्तनिवेशवत् तद्घटकयुष्मत्पदेन ऋषिसम्बोध्यसुरथराजबोधवारणायैतादृशविषयत्वं वाच्यमित्यर्थः, यु-ष्मत्पदेत्यादि, अत्र विषयत्वमित्यनन्तरं वाच्यमिति पूरणीयम्,

अनुगमकेति । स्वसम्बोध्यताऽवच्छेदकेत्यर्थः, गर्भेति । घटकेत्यर्थः, वाक्यान्तरस्थेति । वाक्यान्तरस्थक्रियाकर्म्मत्वनिष्ठविषयतानिरूपितस्व-घटितवाक्यार्थनिष्ठविषयताशून्या या स्वघटितवाक्यजन्यप्रतीतिमत्त्व प्रकारेच्छा तद्विशेष्यत्वमित्यर्थः, एतादृशसम्बोध्यताऽवच्छेदकत्वं स्वत-न्त्रोच्चरितयुष्मत्पदस्य प्रवृत्तिनिमित्तानुगमकं, स्वमनुवादकानुच्चरि-तयुष्मत्पदम्, अत्र चानुवादकर्षेरिच्छा च मया त्वयीत्यादिवाक्या-

क्यार्थकर्म्मकोक्तिक्रियाघटितमहावाक्यार्थघटकयुष्मदर्थघटितावान्तर-वाक्यार्थप्रतीत्याश्रयत्वेनाभिप्रायविषयत्वेऽपि तादृशाभिप्राये तादृशावान्तरवाक्यार्थस्य वाक्यान्तरस्थक्रियाकर्म्मत्वेन भानाद्,

यदि च-इतिपदघटितवाक्यार्थप्रतीतिरूपफलेच्छाऽधीना युष्मद्घटितवाक्यार्थप्रतीतिविषयिणी तादृशवाक्यार्थांशे वाक्यान्तरस्थक्रियाकर्म्मत्वानवगाहिन्यपि तादृशवाक्योच्चारणानुकूलाऽनुवक्तुरिच्छा सम्भवतीति तादृशेच्छामादायानुवादकसम्बोध्यस्य सम्बोध्यताऽऽपत्तिरिति मन्यते ?

तदा वाक्यान्तरार्थप्रतीतीच्छाऽनधीनत्वमपीच्छाविशेषणं देयमिति मया त्वयि हतेऽत्रैवेत्यादौ युष्मच्छब्दान्न सुरथादिप्रतीतिः,

---

र्थविषयकशाब्दबोधानुकूलव्यापारानुकूलातीतकृतिमती देवीत्याकारकदेव्युवाचेत्यादिमयात्वयीत्याद्यन्तमहावाक्यजन्यप्रतीत्याश्रयः सुरथो भवत्वित्याकारा, तथा चात्र तादृशेच्छीयविशेष्यत्वरूपस्यातादृशतयोक्तसम्बोध्यत्वस्य सुरथेऽसत्त्वाद् न युष्मत्पदेन तस्य बोधः,

गुरो ! त्वं मामध्यापयस्वेत्यादिस्वतन्त्रयुष्मच्छब्दस्थले च स्वतन्त्रोच्चारयितुरेतादृशवाक्यजन्यप्रतीत्याश्रयो गुरुर्भवत्वित्याकारैवेच्छा; अतो गुरौ तादृशसम्बोध्यत्वस्य सत्त्वेन तस्य बोधः,

देवी महिषासुरमित्युवाचेति वाक्यान्तरं, तत्रस्थेतिपदार्थतादृशवाक्यार्थप्रकाशनाय मया त्वयीत्यादिवाक्यान्तरं प्रयुज्यते, यथा तमानयेत्यादिवाक्यघटकतच्छब्दार्थव्यक्तये गौरस्तीत्यादिवाक्यान्तरं, तथा चादावित्युवाचेत्यन्तवाक्यजन्यबोधरूपफलविषयकेच्छा भवति, तदनन्तरं मया त्वयीत्यादिवाक्यजन्यबोधरूपोपायविषयकेच्छेत्यभिमन्वानः शङ्कते-यदि चेत्यादि,

अथात्र महावाक्यार्थबोधः फलम्, अवान्तरवाक्यार्थबोध उपाय इति मया त्वयीत्याद्यवान्तरवाक्यमात्रजन्यबोधो भवत्वित्याकाराया इच्छाया अपि तादृशवाक्योच्चारणानुकूलत्वात्तस्याश्च वाक्यान्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थस्यानवगाहनात्तद्विशेष्यत्वमादायानुवादकसम्बोध्यस्य निरुक्तसम्बोध्यताऽऽपत्तिरित्याशङ्कते-यदि चेत्यादि । अत्र गवित्ययमाहेत्यादावितिशब्दस्य कर्म्मत्वार्थकतया गोशब्दकर्म्मताकोच्चारणकर्त्ताऽयमित्येकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वमिव,

एवमभ्रान्तस्य ततो महिषादिप्रतीतिनिर्व्वाहाय वाक्यान्तरस्थस्वघटितवाक्यार्थकर्म्मकक्रियाकर्म्मण्यपि युष्मदः शक्त्यन्तरं स्वीकार्य्यं, तत्र देवी महिषासुरमित्युवाचेतिवाक्यस्थक्रियाकर्म्मत्वं महिषासुरादेरिति तस्यापि त्वयीत्यादिशब्दार्थतोपपत्तिः,

अत्रापि पूर्व्ववत् स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्म्मतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयताऽवच्छेकत्वे-

---

मया त्वयीत्यादिवाक्यस्यापि मयेत्यादिवाक्यार्थकर्म्मताकप्रतिपत्त्यनुकूलशब्दकर्त्री देवीत्येकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वमितिपदस्य कर्म्मत्वार्थकस्य तादृशबोधप्रयोजकाकाङ्क्षासम्पादकत्वादिति पूर्व्वोक्तरूपेच्छैव तादृशवाक्योच्चारणानुकूला; न त्ववान्तरवाक्यार्थबोधमात्रविषयिणीच्छेति विवादग्रस्ततया यदि चेत्युक्तम् ,

अथ वा महावाक्यार्थबोधरूपफलेच्छया तत्प्रयोजकमयात्वयीत्यादिखण्डवाक्यजन्यबोधरूपोपायविषयिका कथनक्रियाकर्म्मत्वानवगाहिनीच्छा भवति; तादृशेच्छामादाय शङ्कते—यदि चेत्यादि,

महावाक्यजन्यमहावाक्यार्थविषयकबोधेच्छायामेव तादृशवाक्योच्चारणप्रयोजकत्वं स्वीक्रियते; न तु खण्डवाक्यजन्यबोधेच्छायां मानाभावादित्यतो वा यदि चेति ।

नन्वेतावता मया त्वयीत्यादौ युष्मत्पदेन सुरथादेर्बोधो मा भूत्; किन्तु महिषासुरादीनां शक्तिभ्रमाजन्यबोधो जायते, तत् कुतः सम्पद्यते ? इत्यत आह—एवमिति । शक्त्यन्तरमिति । स्वतन्त्रास्वतन्त्रयुष्मच्छब्दभेदेन शक्तिद्वयी स्वीकार्य्येति भावः, अत्राप्यन्यदीयस्वार्थतात्पर्य्यकोच्चारणानधीनोच्चारणत्वं स्वातन्त्र्यं, तादृशोच्चारणाधीनोच्चारणकत्वं चास्वातन्त्र्यं बोध्यम्, पूर्व्ववदिति । अत्राप्यस्मच्छब्दरीत्या त्वं पण्डित इति विद्वांसं पश्यामीत्यादावप्यन्यपरयुष्मत्पदस्य दर्शनक्रियाकर्म्मणि शक्तेर्व्वारणाय स्वघठितवाक्यार्थकर्म्मत्वनिष्ठप्रकारतानिरूपिता या वाक्यान्तरजन्यप्रातिपत्तीयविशेष्यता तदाश्रयक्रियाकर्म्मण्येव शक्तिर्वाच्या, अतः पूर्वोक्तरीत्याऽन्योन्याश्रयापत्तिः तद्वारणाय; पूर्व्ववद्=निवेशवदित्यर्थः,

स्वघटितेत्यादि । प्रतिपत्तिनिरूपिता या स्वघटितवाक्यार्थविषयतानिरूपितविषयित्वनिष्ठावषयतानिरूपितक्रियानिष्ठावषयतानिरूपितकर्म्मत्वनिष्ठविषयतानिरूपकाविषयता तादृशविषयावती वक्तृबुद्धिः,

नानुगतानां चैत्रात्मत्वादीनां प्रवृत्तिनिमित्तत्वं बोध्यम्,

सम्बोध्यत्वघटितानुगमकशरीरे च बुद्धिविषयताऽवच्छेदकत्व-निवेशनं मिश्रोक्तमनुपादेयमेव; सम्बोध्यताऽवच्छेदके बुद्धिप्रकारक-त्वस्याव्यावर्त्तकत्वात्,

अथ तात्पर्य्यसत्त्वेऽहमत्रास्मीति मैत्रो जानातीत्यादौ चैत्र-वाक्यस्थास्मच्छब्दाच्चैत्रोऽपि प्रतीयते तत्र चैत्रस्य स्वघटितवाक्यार्थ-कर्म्मकक्रियाकर्त्तृत्वाभावात् तदुच्चारणस्य निरुक्तस्वातन्त्र्यत्वाभावा-च्चानुपपत्तिः,

एवं चैत्र ! त्वया भुक्तमिति मया श्रुतमित्यादौ चैत्रस्य युष्म-च्छब्देन प्रत्यायनात्तस्य च वाक्यान्तरस्थक्रियाकर्म्मान्यत्वाद्ध निरु-क्तेच्छाविषयत्वरूपसम्बोध्यत्वस्य चाभावात्तत्कथमुपपद्यतामिति चेत् ?

तर्हि; स्वातन्त्र्यमुच्चारणविशेषणं सम्बोध्यत्वघटकेच्छायां-

---

तथा च स्वघटितवाक्यार्थनिष्ठविषयताकविषयित्वनिष्ठविषयताकक्रि-यानिष्ठविषयताककर्म्मत्वनिष्ठविषयतानिरूपितप्रतिपत्तीयविषयतावान् चैत्रादिरित्याकारा, तादृशबुद्धिश्च पूर्व्वोक्तयुक्त्या शाब्दबोधात् पूर्व्व-मावश्यकी, प्रवृत्तिनिमित्तत्वमिति । स्वघटितवाक्यार्थविषयताकविषयि-त्वनिष्ठविषयताकक्रियानिष्ठविषयताककर्म्मत्वनिष्ठविषयताकप्रतिपत्ती-यविषयत्वप्रकारकवक्तृबुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छि-न्ने युष्मत्पदस्य शक्तिरिति ध्येयम्,

उक्तानुगमकमाक्षिपति—अथ तात्पर्य्येति ।

अस्मत्पदमिदमुच्चारयितारं मां बोधयत्वित्येतादृशेच्छासत्त्व इत्यर्थः,

ननु स्वतन्त्रास्मच्छब्दस्योच्चारयितरि शक्तत्वेन तस्य बोध इत्यत आह—तदुच्चारणस्येति ।

निरुक्तेति । वाक्यान्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थप्रतिपा-दनेच्छाऽनधीनोच्चारणकत्वेत्यर्थः, वाक्यान्तरस्थक्रियाकर्म्मान्यत्वादिति । वाक्यान्तरस्थस्वघटितवाक्यार्थकर्म्मकक्रियाकर्म्मणि शक्त्यन्तरस्वी-कारेऽपि न तया निर्व्वाह इति भावः,

ननु तादृशशक्त्या निर्व्वाहासम्भवेऽपि स्वतन्त्रोच्चरितयुष्मत्प-दस्य सम्बोध्यशक्ततया तेनैवोपपत्तिर्भवेदित्यत आह—निरुक्तेच्छेति । वाक्यान्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वज-

निरुक्तेच्छाऽधीनत्वादिविशेषणं च त्याज्यमेव, मया त्वयीत्यादौ तात्पर्य्यविरहादेवानुवादकतत्सम्बोध्ययोर्मया त्वयीत्यादिनाऽप्रतिपादनोपपत्तेः,

न चैवं बुद्धिविषयताऽवच्छेदकरूपावच्छिन्न एव युष्मदोऽस्मदश्च शक्तिरास्तां; किं सम्बोध्योच्चारयितृताऽवच्छेदकावच्छिन्ने शक्तिस्वीकारेण तात्पर्य्यत एवातिप्रसङ्गभङ्गसम्भवादिति वाच्यम् ।

तात्पर्य्यसत्त्वेऽपि चैत्रोच्चरितादहंकरोमीत्यादिवाक्याद्ध मैत्रं बोधयितुं प्रयुक्तात्, चैत्रं बोधयितुं प्रयुक्ताच्च त्वं गच्छेत्यादिवाक्याच्चोच्चारयितृत्वसम्बोध्यत्वभ्रमं विना मैत्रादिबोधस्यानुभवविरुद्धत्वाद्ध, अन्यथाऽन्यतात्पर्य्येण स्वरसतस्तथा प्रयोगापत्तेः,

इदन्त्ववधातव्यम्—अयमहं पण्डित इति जानाति; इत्युवाचेत्यादिस्थले सर्व्वत्र वाक्यार्थस्य कर्म्मता न सम्भवति बाधितवाक्यार्थस्थले तदसम्भवाद्ध ।

न च बाधितवाक्यार्थस्थले भ्रमरूपैव तत्कर्म्मत्वप्रतीतिरिति वाच्यम् ।

---

न्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वरूपेत्यर्थः, तथा चैतद्युष्मत्पदस्य स्वतन्त्रोच्चारणाभावाद् न तादृशशक्त्या निर्व्वाह इति भावः,

त्याज्यमेवेति । तथा चास्मत्पदस्योच्चारयितरि स्वघटितवाक्यार्थकर्म्मताऽऽपन्नवाक्यान्तरस्थक्रियाकर्त्तरि च शक्तिद्वयी,

एवं युष्मत्पदस्य सम्बोध्ये वाक्यान्तरस्थस्वघटितवाक्यार्थकर्म्मकक्रियाकर्म्मण्यपि च शक्तिद्वयीति भावः,

नन्वेवं मया त्वयीत्यादावस्मत्पदेनोच्चारयितुर्ऋषेर्युष्मत्पदेन तत्सम्बोध्यस्य सुरथस्य कथं न बोध इत्यत आह—तात्पर्य्यविरहादेवेति । अनुवादकतत्सम्बोध्ययोरिति । महर्षिसुरथयोरित्यर्थः,

सम्बोध्यइत्यादि, इदमुपलक्षणं, तेन वाक्यान्तरस्थस्वघटितवाक्यार्थकर्म्मताऽऽपन्नक्रियाकर्तृतादृशक्रियाकर्म्मणोरपि किं शक्तिस्वीकारेणेत्यर्थ इति ध्येयम्,

बाधितवाक्यार्थस्थल इति । अविदुष्ययमहं पण्डित इत्यादिवाक्यस्थले; मया बन्ध्या सुतो दृष्ट इति; देवदत्त उवाचेत्यत्र च स्थले इत्य-

